आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११९ ।

# कालमाधवकारिका ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११९

भट्टवैद्यनाथसूरिकृतविवरणसहिताः

( श्रीमाधवाचार्यप्रणीत- )

# कालमाधवकारिकाः ।

ता एताः-

वे० शा० सं० रा० मारुलकरोपाह्व रङ्गनाथभट्टा-
त्मजशंकरशास्त्रिभिः संशोधिताः ।

एतत्पुस्तकं

बी. ए. इत्युपपदधारिभिः

## विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते

## आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८६४ ।

खिस्ताब्दाः १९४२ ।

# भूमिका ।

विदितमेवैतत्सर्वेषां संख्यावतां यद्बुक्कणमहाराजस्य कुलगुरुणा मन्त्रिणा च महामहोपाध्यायमाधवाचार्येण पराशरस्मृतिव्याख्याप्रणयनादनन्तरं कालमाधवीयापरपर्यायः कालमाधवाभिख्यः कालनिर्णयात्मकः सर्वाङ्गसुन्दरः पञ्चप्रकरणघटितो ग्रन्थो निरमायीति ।

तत्र प्रथमस्योपोद्घातप्रकरणस्याऽऽदौ ‘ व्याख्याय माधवाचार्यो धर्मान्पाराशरानथ ’ इत्यादिभिः ‘ तमेव निर्णयं शास्त्रन्यायाभ्यां कर्तुमुद्यमः ’ इत्यन्तैश्चतुर्विंशत्यधिकशतेन श्लोकैर्यैः सर्वप्रकरणगतविषया अनुक्रमेण ग्रन्थकृता संक्षिप्तास्त एते श्लोकाः ‘ कालमाधवीयकारिकाः ’ ‘ कालमाधवकारिकाः ’ इति चाऽऽख्यायन्ते । कारिकाश्चैता अतीव समीचीनाः संगृहीतसिद्धान्ताः कालनिर्णयशास्त्रसूत्रीभूता एवेति निःसंदिग्धम् । या एवाधिकृत्य माधवाचार्यैः सुविचारपरिप्लुतो मीमांसादिशास्त्रीयविषयोपबृंहित उत्सर्गापवादपरस्परविरुद्धार्थकादिवचनविवेचनेन संदेहशङ्काकुशङ्कादिनिरासपूर्वकं सिद्धान्तव्यवस्थापको महान् ग्रन्थः कालमाधवनामा निबद्ध इति ।

तत्र मीमांसादिशास्त्राभ्यासाभावाद्वा तावदवकाशाभावाद्वाऽऽलस्याद्वा मान्याद्वा निरुक्तग्रन्थात्सिद्धान्तान्निष्कष्टुमशक्नुवतामपि तादृशसिद्धान्तजिज्ञासूनां कृते तत्परिश्रमजिहीर्षया दयालुना भट्टवैद्यनाथसूरिणा कालमाधवकारिकोपरि सरलं सुबोधं च किमपि विवरणं विहितम् । तस्यास्य विवरणस्य कर्ता भट्टवैद्यनाथसूरिः कुत्रत्यः कश्च तस्य वंशः कदा चाभूत्कस्य गुरोरन्तेवासीत्यादिकं तच्चरितं यत्नेनान्विष्यमाणमपि न किंचिदुपलभ्यते । किंतु ग्रन्थसमाप्तौ श्रीमद्धर्मशास्त्रपारावारीणतत्सद्रामचन्द्रभट्टात्मज इति विशेषणदानाद् भट्टवंशीयः रामचन्द्रात्मजः धर्मशास्त्रे पण्डितश्चायमिति प्रतीयते । एतत्कृतं विवरणमपि निपुणतरं विलोक्यमानं सदस्य धर्मशास्त्रे पाण्डित्यं निवेदयतीति सत्यम् । अस्य ग्रन्थस्य पुस्तकमेकमेवाऽऽसीन्नान्यत् । तच्च जीर्णं हस्तालिखितं ‘ भोरसंस्थानाश्रित-आहिताग्नि बाबादीक्षितहोशिंगचातुर्मास्ययाजी ’ इत्येतेषां सकाशाल्लब्धम् । तस्मादस्य संशोधने मन्मतिमान्द्यात्कीलकयोजकप्रमादाद्वा जातानां स्खलितानां सूचनेन मामनुगृह्णन्तु दयालवो विद्वांस इति प्रार्थयते—

शके १८६४ कार्तिक वद्य १० गुरुवासरः, पुण्यपत्तनम् । आनन्दाश्रमः } मारुलकरोपाह्वः शंकरशास्त्री भारद्वाजः ।

भट्टवैद्यनाथसूरिकृतविवरणसहिताः

( श्रीमाधवाचार्यप्रणीत- )

# कालमाधवकारिकाः ।

नत्वा गजाननं देवमगजानन्दवर्धनम् ।
कालमाधवपद्यानि विवरिष्ये यथामति ॥ १ ॥

विघ्नविघाताय मङ्गलमाचरति—

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

वागीशाद्या इति । सुमनसो देवाः । सर्वार्थानां सर्वपुरुषार्थसाधनानाम् । उपक्रम आरम्भे ॥ १ ॥

इदानीं यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति स्मरणाद्गुरुदेवतयोः स्मरणमाचरति—

सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परं
मज्जन्सज्जनसङ्गतीर्थनिपुणः सद्वृत्ततीर्थं श्रयन् ।
लब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ॥ २ ॥

सोऽहमिति । सोऽहं माधवाचार्यनामा विवेकरूपस्य तीर्थस्य पदवीं मार्गं प्राप्य ह्यव्याहतं श्रीकण्ठं महादेवं भजे ध्यायामीत्यर्थः । कीदृशोऽहम् । आम्नायो वेदः । तद्रूपतीर्थे परं केवलं मज्जन्मज्जनं कुर्वंस्तदेकपरायण इत्यर्थः । तथा सज्जनसङ्गरूपेण तीर्थेन निपुणो निर्णीतशास्त्रतत्त्वः । तथा सद्वृत्तं साधूनामाचरणं तदेव तीर्थं श्रयन्नाश्रयन् । तथा श्रीभारतीतीर्थतस्तन्नामकाद्गुरोः सकाशाल्लब्धां प्रभावलहरीमिष्टदेवताप्रसादरूपां लहरीमाकलयन्प्राप्नुवन्नित्येकोऽर्थः । भारतीरूपात्तीर्थाल्लब्धां प्रभावलहरीं साहित्यरूपामाकलयन्नित्यपरः। तथा विद्या ब्रह्मविद्या तद्रूपं तीर्थमुपाश्रयन् सेवमान इत्यर्थः । एतस्यैव विद्यारण्य इति नाम प्रसिद्धम् ॥ २ ॥

सत्यैकव्रतपालको द्विगुणधीरुपर्थी चतुर्वेदिता
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः ।
अष्टव्याकिकलाधरो नवविधिः पुष्यद्दशमत्ययः
स्मार्तोच्छ्रायधुरंधरो विजयते श्रीबुक्कणक्ष्मापतिः ॥ ३ ॥

सत्यैकेति । श्रीमान् बुक्कणनामा क्ष्मापती राजा विजयते । कीदृशः । सत्यरूपं यदेकं

मुख्यं व्रतं तत्पालकः । तथा द्विगुणधीरितरापेक्षया द्विगुणबुद्धिमानित्यर्थः । अथवा द्वा गुणौ सत्त्वरजोरूपौ यस्यां तादृशी धीर्यस्य नतु तमोगुणशालिनीत्यर्थः । तथा त्रीन् धर्मार्थकामानर्थयते प्रार्थयते तच्छीलः । अथवा तिस्रः प्रभावोत्साहमन्त्रजाः शक्तीरर्थयते तच्छील इति । तथा चतुर्णां वेदानां सामाद्युपायानां वा वेदिता ज्ञाता । तथा पञ्चसु स्कन्धेषु तन्नामकेषु सहायादिपदार्थेषु कृती कुशलः । तदुक्तं नीतिशास्त्रे—सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यत इति । अस्यार्थः—सहाया राजकार्ये मन्त्रिसैनिकाद्याः । तथा कार्यस्य साधन उपायाः सामादयः । तथा विदेशकालयोर्विभागो व्यवस्थाऽस्मिन् देशेऽस्मिन् कालेऽयमुपाय इत्येवंरूपा । तथा विनिपातस्य राष्ट्ररोगोत्पातादिरूपस्य प्रतीकारो निराकरणम् । तथा सिद्धिः, इष्टलाभः । एते पञ्चस्कन्धा राज्याङ्गमित्यर्थः । पुनः कीदृशो राजा । षडन्वयदृढः । षण्णां गुणानामन्वयेन दृढोऽजेय इत्यर्थः । षण्णां शास्त्राणामित्यप्यर्थान्तरम् । पुनः सप्तभिरङ्गैः सर्वसहनशीलः । तानि चामात्यसुहृत्कोषराष्ट्रदुर्गबलानि चेति नीतिशास्त्रोक्तानि ज्ञेयानि । तथाऽष्टौ व्यक्तयो यस्य तादृशस्य शिवस्यांशस्य धारकः । ताश्च मूर्तयोऽवग्नियजमानचन्द्रसूर्याकाशपृथ्वीवायुरूपा आगमोक्ताः । पुनर्नवनिधिर्नवसंख्याका निधयो यस्य । ते च महापद्मादयः प्रसिद्धाः । नवरसानां निधिरित्यर्थान्तरम् । नवो नूतनो निधिरिति वा । पुनः पुष्यद्दशप्रत्ययः । पुष्यन्ती वर्धमाना दशा यस्य तादृशः प्रत्ययो ज्ञानं यस्य तादृशः । तथा स्मार्तानां पाखण्डिभिन्नानां शिष्टानामुच्छ्रायस्य वृद्धेर्धुरंधरः । तत्प्रवर्तक इत्यर्थः ॥ ३ ॥

नन्वेतावताऽपि तव कुतो धर्मनिर्णयकरणे सामर्थ्यं तत्राऽऽह—

व्यामूढानामिह तनुभृतां जाह्नवी तीर्थमेकं<br>
विद्यातीर्थं प्रकृतिविमलं सद्विवेकोदयानाम् ।<br>
सर्वेषां तु प्रथमसुखदं भारतीतीर्थमाहु-<br>
स्तद्भावान्मे विमलमनसो निर्णये शक्तिरस्ति ॥ ४ ॥

व्यामूढानामिति । इह लोके व्यामूढानां पुरुषार्थज्ञानशून्यानां तनुभृतां शरीरिणां जाह्नव्येकं केवलं तीर्थं प्राप्त्युपाय इत्यर्थः । तथा सन् विवेकोदयो येषां तेषां पण्डितानां विद्यारूपं तीर्थमस्तीति शेषः । कीदृक् । प्रकृतिविमलं प्रकृत्यैव विमलम् । तथा सर्वेषां जनानां प्रथमतः सुखदं भारतीरूपं तीर्थमाहुः । शिष्टा इति शेषः । भारतीतीर्थनामानं गुरुमित्यपरोऽर्थः । तस्मिन्भावाद्भक्तेर्वशाद्विमलं संशयशून्यं मनो यस्य तादृशस्य मम धर्मनिर्णये शक्तिरस्तीत्यर्थः ॥ ४ ॥

व्याख्याय माधवाचार्यो धर्मान्पाराशरानथ ।<br>
तदनुष्ठानकालस्य निर्णयं वक्तुमुद्यतः ॥ ५ ॥

व्याख्यायेति । शिष्यावधानाय वक्तव्यं प्रतिजानीते । पराशरान्पराशरप्रोक्तान् । एतेन कालनिर्णयस्य प्रयोजनं धर्मानुष्ठानमुक्तम् ॥ ५ ॥

वक्ष्यमाणानुक्रमस्य प्रयोजनमाह—

अर्थोऽनुक्रम्यते श्लोकैरखिलो निर्णिनीषितः ।
तावतैवानुतिष्ठासुर्निःसंदेहः प्रवर्तताम् ॥ ६ ॥

अर्थ इति । अनुक्रम्यते संक्षेपेण कथ्यते । निर्णिनीषितो निर्णेतुमिष्टः । तावतैवेति । अनुक्रमणमात्रादेवेत्यर्थः । अनुतिष्ठासुरनुष्ठानं कर्तुमिच्छुः । तथा चानुष्ठानसौकर्यमनुक्रमणप्रयोजनमित्यर्थः ॥ ६ ॥

ननु वादिकृतविप्रतिपत्तौ संदेहात् कथं निर्णयस्तत्राऽऽह—

ततो मीमांसुचित्तस्य समाधानाय तत्पुनः ।
विवरिष्ये यथान्यायं श्रुतिस्मृतिवचोबलात् ॥ ७ ॥

तत इति । मीमांसा धर्मनिर्णयेच्छा तच्छीलं चित्तं यस्य तस्य समाधानाय संदेहनिरासाय तदनुक्रान्तमर्थजातं यथान्यायं न्यायानुसारेण विवरिष्ये विस्तरपूर्वकं कथयिष्य इत्यर्थः ॥ ७ ॥

पञ्च प्रकरणान्यत्र तेषूपोद्घातवत्सरौ ।
प्रतिपच्छिष्टतिथयो नक्षत्रादिरिति क्रमः ॥ ८ ॥

पञ्चेति । प्रकरणानि निरूपणीयार्थस्थानानि । तेष्विति । क्रम इत्यन्वयः । उपोद्घातः प्रकृतसिद्ध्यर्थं चिन्तनमेकम् । संवत्सरप्रकरणं द्वितीयम् । प्रतिपत्प्रकरणं तृतीयम् । अवशिष्टतिथिप्रकरणं चतुर्थम् । नक्षत्रादिप्रकरणं पञ्चममिति क्रमेणेत्यर्थः ॥ ८ ॥

उपोद्घातप्रकरणे वक्तव्यं दर्शयति—

उपोद्घाते कालसत्त्वं तस्य निर्णययोग्यता ।
ईश्वरो नित्यकालात्मा चिन्त्योऽयं सर्वकर्मसु ॥ ९ ॥

उपोद्घात इति । कालसत्त्वं कालसाधनम् । तस्य कालस्य । निर्णययोग्यता । अब्दादिखण्डकालस्य निर्णययोग्यत्वेऽपि नित्यकालस्य कथमनुष्ठानाङ्गत्वं तत्राऽऽह—ईश्वर इति । ईश्वरस्य सकलकर्मारम्भे स्मरणस्य विधानात् । तस्य च नित्यकालात्मकत्वात्तदनुसंधानार्थं तत्र निर्णय इत्यर्थः । तदुक्तम्—

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमुच्यतम् ॥ इति ।
सर्वेष्वाम्भकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ इति च ॥ ९ ॥

जन्यकालेऽब्दमुख्यत्वमुक्तमेतच्चतुष्टयम् ।
अब्दायनर्तुमासाश्च पक्षः प्रकरणान्तरे ॥ १० ॥

जन्येति । जन्यकालमध्येऽब्दस्य मुख्यत्वं प्रधानत्वम् । अयनर्त्वादीनां तु तदवयवत्वमित्यर्थः । एवं चाब्दमारभ्यैव जन्यकालानिरूपणं युक्तमिति भावः । प्रकरणान्तरे संवत्सरप्रकरणे ॥ १० ॥

अब्दः पञ्चविधश्चान्द्रो व्रतादौ तिलकादिके ।
सुजन्मादिव्रते सौरो गोसत्रादिषु सावनः ॥ ११ ॥

अब्द इति । अब्दः संवत्सरः पञ्चविधः । सौरः सावनो नाक्षत्रश्चान्द्रो बार्हस्पत्य इति । तत्र चान्द्रो नाम चान्द्रद्वादशमासात्मकः । सौरो नाम संक्रान्तिघटितद्वादशमासात्मकः । नाक्षत्रो नाम नक्षत्रघटितद्वादशमासात्मकः । सावनो नाम त्रिंशद्दिवसात्मकद्वादशमासात्मकः । बार्हस्पत्यो नाम बृहस्पतेरेकराशिभोगपर्यन्तः । तत्र चान्द्रस्तिलकादिव्रते ग्राह्यः । तत्र तिलकव्रतं भविष्योत्तरपुराणे । वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः । शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः । ललाटपट्टे तिलकं कुर्याच्चन्दनपङ्कजम् । ततःप्रभृत्यनुदिनं तिलकालंकृतं मुखम् । धार्यं संवत्सरं यावच्छशिनेव नभःस्थलम् । इति । अत्र शुक्लप्रतिपदमारभ्य विधानाच्छुक्लप्रतिपदादिदर्शान्तचान्द्रमासघटितजं वर्षम् । सौरवर्षानुसारेण सुजन्मावाप्तिव्रतं विष्णुधर्मोत्तर उक्तम् । मेषसंक्रमणे भानोः सोपवासो नरोत्तमः । पूजयेद्भार्गवं देवं रामं शक्त्या यथाविधि ॥ इत्यारभ्य मीनसंक्रमणे मत्स्यं वासुदेवं च पूजयेदित्यन्तेन ग्रन्थेन । अन्ते च—कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु न चापि जन्मेत्युपसंहृतम् । अत्र संक्रान्तिमारभ्य संवत्सरगणनात्सौरं वर्षं ग्राह्यम् । तथा गोसत्रं गवामयनाख्यं तत्र सावनः संवत्सरः । स च षष्ट्यधिकशतत्रयदिनात्मकः ॥ ११ ॥

त्रयोऽप्याचार्यसेवादौ विकल्प्यन्ते निजेच्छया ।
आयुर्दाये तु नाक्षत्रो बार्हस्पत्योऽधिवत्सरे ॥ १२ ॥

आचार्यसेवादौ तु त्रयाणामपि संवत्सराणां विकल्पेन ग्रहणम् । आयुर्दायगणनायां नाक्षत्रः संवत्सरो ग्राह्यः । अधिवत्सरो नाम मध्यमगणनेन गुरुसंक्रान्तिहीनो यश्चान्द्रो वत्सरस्तत्र बार्हस्पत्यः संवत्रो ग्राह्यः ॥ १२ ॥

अथ चान्द्रस्यावान्तरभेदानाह—

चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।
संपरीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः ॥ १३ ॥

चान्द्राणामिति । प्रभवादिनाम्नाम् । पञ्चके पञ्चके युगे संघे प्रथमस्य संवत्सर

इति द्वितीयस्य परिवत्सर इति तृतीयस्य इदावत्सर इति चतुर्थस्यानुवत्सर इति पञ्चमस्येद्वत्सर इति संज्ञाः। एवं पञ्चसु जातेषु पुनर्द्वितीयपञ्चक एता एव संज्ञा ज्ञेयाः। तथा च ब्रह्मवैवर्ते—

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः।
इदावत्सरस्तृतीयश्च चतुर्थश्चानुवत्सरः।
इद्वत्सरः पञ्चमस्तु तत्संघो युगसंज्ञकः॥ इति।

एतेषां विनियोगो विष्णुधर्मोत्तरे—संवत्सरे तु दातॄणां तिलदानं महाफलम्। परिपूर्वे तथा दानं यवानां द्विजसत्तम॥ इदापूर्वे च वस्त्राणां धान्यानां चानुपूर्वके। इत्पूर्वे रजतस्यापि दानं प्रोक्तं महाफलम्॥ १३॥

तदाह—

**तिलो यवो वस्त्रधान्ये रजतं दीयतेऽत्र तु।**
**उग्रे कर्मणि शान्ते च स्तोऽयने दक्षिणोत्तरे॥ १४॥**

तिल इति। उग्र इति। दक्षिणायनं कर्कादि ऋतुत्रयमुग्रदैवते कर्मणि ग्राह्यम्। उत्तरायणं तु मकरादि ऋतुत्रयं सौम्ये कर्मणि ग्राह्यम्। तदुक्तं वैखानससंहितायाम्—मातृभैरववाराहनारासिंहत्रिविक्रमाः। महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने॥ इति। उत्तरायणस्य सौम्यकर्माङ्गत्वं स्मृतिप्रसिद्धम्। उदगयन आपूर्यमाण इत्यादौ॥ १४॥

**वसन्ताद्यृतवो द्वेधा चान्द्राः सौराश्च चान्द्रकाः।**
**चैत्राद्या अथ मीनाद्या मेषाद्या वा विवस्वतः॥ १५॥**

वसन्तादीति। वसन्ताद्याः षड्ऋतवो द्विविधाश्चान्द्राः सौराश्च। तत्र चान्द्रमानेन चैत्रादिमासद्वयं वसन्तः। ज्येष्ठादिमासद्वयं ग्रीष्मः। श्रावणभाद्रपदौ वर्षा ऋतुः। आश्विनकार्तिकौ शरत्। मार्गशीर्षपौषौ हेमन्तः। माघफाल्गुनौ शिशिरः। तथा च श्रुतिः—मधुश्च माधवश्च वासन्तिकावृतू शुक्रश्च शुचिश्च ग्रैष्मावृतू। नभश्च नभस्यश्च वार्षिकावृतू। इषश्चोर्जश्च शारदावृतू। सहश्च सहस्यश्च हैमन्तिकावृतू। तपश्च तपस्यश्च शैशिरावृतू। इति। यद्यपि मासद्वयात्मक एक एव ऋतुस्तथाऽप्यृतू इति द्विवचनं तदवयवमासद्वयाभिप्रायम्। मध्वादिशब्दाश्चैत्रादिमासवचनाः। अत्र च वसन्तस्य प्राथम्यं 'मुखं वा एतदृतूनां यद्वसन्तः' इति श्रुतिवशादवगन्तव्यम्। विवस्वतः सूर्यस्य संबन्धिनः सौरा इत्यर्थः। ते च मीनाद्या मेषाद्या वेति विकल्पः। तथा च श्रुतिः—मीनमेषयोर्मेषवृषभयोर्वा वसन्त इति। ऋतुविनियोगस्तु वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिश्रुत्या ज्ञेयः। एवं विष्णुधर्मोत्तरे षट्सु ऋतुषु पृथक्षण्मूर्तिपूजोक्ता। तथा वसन्ते स्नात्वाऽनुलेपनादिदानम्। ग्रीष्मे पानकादिदानमुक्तम्। देवीपुराणे वर्षासु तिलदानमुक्तम्। तथा

विष्णुधर्मोत्तरे--एवं शरद्यन्नदानं हेमन्ते वस्त्रादिदानं शिशिरे च वस्त्रदानमि-त्युक्तम् ॥ १५ ॥

तदाह—

तेष्वाधानादयस्तद्वत्षण्मूर्तिव्रतपूजनम् ।
मासास्तु सावनः सौरश्चान्द्रो नाक्षत्र इत्यमी ॥ १६ ॥

अथ मासो निर्णीयते । मासास्त्वित्यादिना । सावनस्त्रिंशताऽहोरात्रैः परिमितो लोकव्यवहारे प्रसिद्धः । सूर्यस्यैकराशिभोगो यावत्कालं स सौरः । अश्विन्यादि-सप्तविंशतिनक्षत्रपरिवृत्तौ नाक्षत्रः । चान्द्रः शुक्लादिदर्शान्तः पूर्णिमान्तश्चेति द्विविधः । तदुक्तं ब्रह्मसिद्धान्ते—

चान्द्रशुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः ॥ इति ।

विष्णुधर्मोत्तरे—सर्वर्क्षपरिवृत्तौ तु नाक्षत्रो मास उच्यते ॥ १६ ॥

दर्शान्तः पूर्णिमान्तो वा चान्द्रोऽसौ विप्रवैश्ययोः ।
सौरो राज्ञः सावनस्तु यज्ञे ज्यौतिषिके परः ॥ १७ ॥

एतेषां व्यवस्थामाह–असौ विप्रवैश्ययोरिति । असौ चान्द्रो विप्रवैश्ययोर्विहिते कर्मणि ग्राह्य इत्यर्थः । राज्ञः कर्मणि सौरः । सावनस्तु यज्ञे गवामयनादौ त्रिंशद्दिनात्मकस्यैव मासस्य ग्रहणात् । ज्यौतिषिक आयुर्दायविवाहादौ परो नाक्षत्र इत्यर्थः । तदुक्तं ब्रह्मसिद्धान्ते—अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु । संक्रान्तिपौर्णमासी-भ्यां तथैव नृपवैश्ययोरिति । दर्शान्तानां पूर्णिमान्तानां च मासविशेषाणां चैत्रादि-संज्ञा नक्षत्रप्रयुक्ताः । तदुक्तं संकर्षणकाण्डे—

द्वे द्वे चित्रादिताराणां परिपूर्णेन्दुसंगमे ।
मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठान्त्यसप्तमाः ॥ इति ।

परिपूर्णेन्दुसंगमे यत्संबन्धिपूर्णिमायां चित्रादिताराणां द्वे द्वे भवत इति शेषः । ते मासाश्चैत्रवैशाखादिसंज्ञा इत्यर्थः । यस्मिन्मासे पूर्णिमा चित्रास्वात्योरन्यतरेण युज्यते स चैत्रः । एवं वैशाखादयोऽपि विशाखादिनक्षत्रयोगेन ज्ञेयाः । षष्ठो भाद्रपद-त्रिकैः शततारकापूर्वाभाद्रपदोत्तराभाद्रपदाख्यैस्त्रिभिस्तत्पूर्णिमायोगे । सप्तम आश्विनः । रेवत्यात्रिदिकयोगे । अन्त्यः फाल्गुनः । पूर्वाफल्गुन्यादित्रिकयोग इत्यर्थः । सौरादि-मासत्रयमध्ये कस्यचित्क्वचित्प्राशस्त्यं ज्योतिर्ग्रन्थ उक्तम्—

सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥ इति ॥ १७ ॥

माघादिमासभेदेषु तिलदानादयः स्मृताः ।
चान्द्रोऽधिमासोऽसंक्रान्तः सोऽन्तर्भवति चोत्तरे ॥ १८ ॥

मलमासं निरूपयति । तदुक्तं ब्रह्मसिद्धान्ते—'चान्द्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्तितः' इति । शुक्लप्रतिपदादिदर्शान्तश्चान्द्रो मासस्तन्मध्ये रविसंक्रान्त्यभावे मलमासो भवति । तथा च चतुर्दश्याममायां वा रविसंक्रमणम् । ततः शुक्लप्रतिपदमारभ्य दर्शान्तं मासमतिक्रम्य प्रतिपदादौ रविसंक्रमणं तत्रासंक्रान्तो मलमाससंज्ञक इति । मलत्वं च कालाधिक्यात् । तथा च गृह्यपरिशिष्टे—मलं वदन्ति कालस्य मासं कालविदोऽधिकमिति । कालाधिक्यं च विष्णुधर्मोत्तरे दर्शितम्—

सौरेणाब्दस्तु मानेन यदा भवति भार्गव ।
सावने तु तदा माने दिनषट्कं प्रपूर्यते ।
दिनरात्राश्च ते राम प्रोक्ताः संवत्सरेण षट् ।
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥
वर्षद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ।
स चाधिमासकः प्रोक्तः काम्यकर्मणि गर्हितः ॥ इति ।

सौरसंवत्सरः षड्भिर्दिनैः सावनादतिरिच्यते । एकादशभिर्दिनैश्चान्द्रादतिरिच्यते । तथा च चान्द्रसंवत्सरद्वयात्सौरसंवत्सरद्वयं द्वाविंशत्या दिनैरधिकं भवति । अत ऊर्ध्वं सौरमासाष्टकं चान्द्रमासाष्टकात्सार्धैः सप्तभिर्दिनैरतिरिच्यते । तथा च मिलित्वा दिनार्धन्यूनो मासो भवति । सोऽयमधिको मास इति । अवशिष्टदिनार्धपूरणं च यथोक्तकालादूर्ध्वं षोडशभिर्दिनैः संपद्यते । अत एव सिद्धान्तेऽभिहितम्—

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।
घटिकानां चतुष्केण पतति ह्यधिमासकः ॥ इति ।
यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मालमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत् ॥

इति काठकवचनं तु ज्योतिःशास्त्रप्रसिद्धस्फुटमानाभिप्रायम् । द्वात्रिंशद्भिरिति वचनं तु मध्यममानाभिप्रायमिति न विरोधः । यद्यपि द्वात्रिंशन्मासेषु गतेषु योऽधिको मासः स शुक्लप्रतिपदादिदर्शान्तत्वाभावाच्छ्रौतस्मार्तकर्मानुपयुक्त उक्तः । स चायुक्तः ।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः ।
अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ ॥
तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः ॥

अयमर्थः—दर्शपूर्णमासयाजिना शुक्लप्रतिपदि दर्शेष्टिदेवौ इन्द्राग्नी हूयेते । कृष्णप्र-

तिपदि तु पूर्णमासेष्टिदेवौ अग्नीषोमौ । अमावास्यायां पिण्डपितृयज्ञदेवौ सोमपितृगणौ। तत्रैवं सति शुक्लप्रतिपदादिदर्शान्तो मासः संक्रान्तिरहितोऽधिमास इत्यर्थाल्लभ्यत इति । तस्मान्मध्यमानगणना श्रौतस्मार्तयोर्नोपयुक्ता दर्शान्तद्वात्रिंशन्मासोत्तरं षोडशसु दिनेषु गतेषु कृष्णद्वितीयायां मलमासोपक्रमात् तथाऽपि कालाधिक्यमात्रेण तदुदाहरणात्त्रिंशत्तमे भवेदित्यस्य तूपलक्षणत्वान्न दोषः । सोऽन्तर्भवतीति । उत्तरमासशेष इत्यर्थः । तथा च ज्यौतिषिके—

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वमर्धं परित्यज्य कर्तव्याश्चोत्तरे क्रियाः ॥ इति ।

तथा—आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः । इति च ।

एवं च यदा पूर्णिमान्तचैत्रकृष्णचतुर्दश्यां दर्शे वा मीनसंक्रान्तिः । ततः शुक्लप्रतिपदमारभ्याग्रिमदर्शपर्यन्तं न संक्रान्तिः । किंतु तदुत्तरप्रतिपदि द्वितीयायां वा मेषसंक्रांतिः, ततः शुक्लप्रतिपदादिदर्शान्तश्चैत्रोऽसंक्रान्तो मलमास इति । अधिकमास इति व्याख्यायेत । एवं वैशाखादिष्वपि च ज्ञेयम् ॥ १८ ॥

**असंक्रान्तावेकवर्षे द्वौ चेत्संसर्प आदिमः ।**
**क्षयमासो द्विसंक्रान्तः स चांहस्पतिसंज्ञकः ॥ १९ ॥**

असंक्रान्ताविति । एकस्मिन्वर्षे चेद्द्वावसंक्रान्तौ भवतस्तदा तयोर्मध्य आदिमः प्रथमः संसर्पसंज्ञः । तत्र द्वयोरसंक्रान्तयोर्मध्ये संक्रान्तिद्वययुक्तः स च क्षयमाससंज्ञकोंऽहस्पतिसंज्ञकश्च भवति । एवं कार्तिकादिमासत्रयसंज्ञायां हेतुरुच्यते। यदा धनुःस्थे रवौ दर्शसमाप्तिस्तदाऽस्य मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः । चैत्राद्यः स ज्ञेय इति वचनेन मार्गशीर्षत्वं प्राप्तं, यदि त्वेकस्मिन्नेव मासे शुक्लप्रतिपदि धनुःसंक्रान्तिस्तत ऊर्ध्वं दर्शे मकरसंक्रान्तिः स मासो द्विसंक्रान्तिः क्षयाख्यः । तत्र धनुःस्थे रवौ दर्शो न समाप्तो मकरस्थे तु समाप्तस्ततः पौषमासत्वं तस्य संपन्नम् । तथा च मार्गशीर्षस्य तत्र लुप्तत्वात्क्षयसंज्ञा युक्तेति । तदुक्तं ज्योतिःशास्त्रे—

असंक्रान्तिमासोऽधिमासः स्फुटः स्याद्द्विसंक्रान्तिमासः क्षयाख्यः प्रदिष्टः ।
क्षयः कार्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं च ॥ इति ।

यदाऽमान्तमानेन भाद्रपदामावास्यायां कन्यासंक्रान्तिस्तदूर्ध्वमसंक्रान्तमेकं मासमतीत्योत्तरयोर्मासयोः क्रमेण तुलावृश्चिकसंक्रान्ती भवतः । तत ऊर्ध्वमेकस्मिन्नेव मासे शुक्लप्रतिपदि धनुःसंक्रान्तिस्तदनन्तरं दर्शे मकरसंक्रान्तिः स क्षयमासः । तत ऊर्ध्वं कुम्भसंक्रान्तिरमावास्यायां तत ऊर्ध्वमेकमसंक्रान्तं मासमतीत्य शुक्लप्रतिपदि मीनसंक्रान्तिः । एवं सत्येकस्मिन्नेव संवत्सरे द्वावसंक्रान्तौ मासावेकश्च मध्ये द्विसंक्रान्तिमास इति यथोक्तमासत्रयसंपत्तिर्बोध्या ॥ १९ ॥

त्रयस्त्याज्या विवाहादौ संसर्पांहस्पती उभौ ।
शुद्धौ श्रौते तथा स्मार्ते मलमासो विविच्यते ॥ २० ॥

त्रयस्त्याज्या इति । विवाहादौ शुभकार्ये त्रयो ह्येते वर्जनीयाः । तदुक्तं ज्यौतिषे—

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पांहस्पती मासावधिमासश्च निन्दिताः ॥ इति ।

तत्र विशेषमाह—संसर्पेति । संसर्पः प्रथमासंक्रान्तः । अंहस्पतिः क्षयमासः । एतौ द्वौ श्रौते स्मार्ते च कर्मणि शुद्धौ ग्राह्याविव्यर्थः । तदुक्तम्—

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ॥ इति ।

प्राकृतः शुद्धः । अत एव सम्यक्संसपर्न्ति कर्माणि यस्मिन्निति योगात्संसर्पसंज्ञा । एवं क्षयमासोऽपि । तत्र प्राप्तस्य कर्मणोऽन्यत्रासंभवात् । तत्र कर्मणि श्राद्धादौ शुद्ध एव । ननु क्षयमास एकमासलोपात्कथं तत्प्रयुक्तं कर्मानुष्ठानम् । कथं च द्वादश मासाः संवत्सर इति नियम इति । उच्यते । यत्र मासि रविसंक्रमद्वयं तत्र मासयुगुलं क्षयाह्वयमिति मासद्वयात्मकत्वमेकस्यैव क्षयस्योच्यते । तथा च वचनान्तरम्—द्विसंक्रातिः क्षयः स्यात्स एकोऽपि द्व्यात्मको भवेदिति । तत्र चैवं व्यवस्थोक्ता—

तिथ्यर्ध्ये प्रथमे पूर्वो द्वितीयेऽर्धे तथोत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥ इति ॥ २० ॥

इदानीं मलमासे कार्याकार्यनिर्णयः क्रियते—

काम्यारम्भं तत्समाप्तिं मलमासे विवर्जयेत् ।
आरब्धं मलमासात्प्राक् कृच्छ्रचान्द्रादिकं तु यत् ॥ २१ ॥

काम्यारम्भमिति । अत एव पैठीनसिः—श्रौतस्मार्तक्रियाः सर्वा द्वादशे मासि कीर्तिताः । त्रयोदशे तु सर्वास्ता निष्फला इति कीर्तिताः । स्मृत्यन्तरेऽपि—इष्ट्यादिसर्वकाम्यं तु मलमासे विवर्जयेदिति । अयं च निषेध आरम्भसमाप्तिविषयः ।

असूर्या नाम ये मासा न तेषु मम संमताः ।
व्रतानां चैव यज्ञानामारम्भाश्च समाप्तयः ॥ इति ।

पूर्वमारब्धं तु कृच्छ्रादि मलमासेऽपि समापनीयमित्याह—
आरब्धमिति ॥ २१ ॥

तत्समाप्यं सावनस्य मासस्यानतिलङ्घनात् ।
आरम्भस्य समाप्तेश्च मध्ये स्याच्चेन्मलिम्लुचः ॥ २२ ॥

तत्र हेतुमाह–सावनस्येति । द्वादशाहोरात्रमितत्वात्कृच्छ्रस्य मध्ये विरामायोगादिति भावः । आरम्भसमाप्त्योर्मध्यपातिन्यधिमासेऽपि कर्म कार्यमित्याह–आरम्भस्येति । तथा च स्मृतिः–अधिमासनिपातेऽपि त्वेष एव विधिक्रम इति ।

प्रवृत्तमखिलं काम्यं तदनुष्ठेयमेव तत् ।
कारीर्यादि तु यत्काम्यं तस्याऽऽरम्भसमापने ॥ २३ ॥
कार्ये कालविलम्बस्य प्रतीक्षाया असंभवात् ।

काम्यस्यापि क्वचित्कर्तव्यतामाह–कारीर्यादि त्विति । कारीर्या वृष्टिकामो यजेतेति विहिता कारीरीसंज्ञेष्टिः । तदारम्भसमापने मलमासेऽपि कर्तव्ये । शुद्धमासप्रतीक्षायां क्षेत्रशुष्कताप्रसङ्गात् ॥ २३ ॥

अनन्यगतिकं नित्यमग्निहोत्रादि न त्यजेत् ॥ २४ ॥

अनन्येति । अत एव काठकगृह्ये मलेऽनन्यगतिं कुर्यान्नित्यां नैमित्तिकीं क्रियामिति । नित्या–अग्निहोत्रादिरूपा । नैमित्तिकी ग्रहणस्नानादिरूपा । तदुक्तं गृह्यपरिशिष्टे—

अवषट्कारहोमाश्च पर्व चाऽऽग्रयणं तथा ।
मलमासेऽपि कर्तव्याः काम्या इष्टीर्विवर्जयेत् ॥

अवषट्कारहोमा अग्निहोत्रौपासनवैश्वदेवादयः । पर्व दर्शपूर्णमासौ पार्वणस्थालीपाकश्च । दर्शादीनां नित्यत्वमकरणे प्रत्यवायादवगन्तव्यम् । नित्यमिति । पूर्वोक्तकाम्यस्याप्युपलक्षणम् । अनन्यगतिकत्वस्य तुल्यत्वात् । अनन्यगतिकानि नैमित्तिकान्याह यमः—

चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम् ।
कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा ॥ इति ॥ २४ ॥

एवं च सगतिकं नित्यनैमित्तिकमेव वर्जनीयमित्याह—

गत्यन्तरयुतं नित्यं सोमयागादि वर्जयेत् ।
अगति ग्रहणस्नानं जातेष्टिर्गतिसंयुता ॥ २५ ॥

गत्यन्तरयुतमिति । सोमयागो हि वसन्ते विहितः । वसन्तश्च मलमासवर्जनेऽपि शुद्धमासे संभवतीति सगतिकत्वम् । तथा च काठकगृह्यम्—

सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे ।
षष्ठीष्ट्याग्रयणाधानचातुर्मास्यादिकान्यपि ॥
महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् ।
स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ॥ इति ।

षष्ठीष्टिः काठकशाखायां प्रसिद्धा । जातेष्टिर्गतिसंयुतेति । जातेष्टिर्जननानन्तरं

विहिता। जातकर्मोत्तरं च स्तनप्राशनं न ततः पूर्वम्। तथा च प्रथमं जातेष्टिः। ततो जातकर्म। ततः स्तनप्राशनमिति बालविपत्तिशङ्का स्यात्। अतः शेषिविरोधाज्जातेष्टिर्जातकर्मानन्तरं भवति। एवं च निमित्तानन्तर्यबाधस्याविशेषादाशौचापगमे ऽसा कार्या। एवं पर्वकालानुग्रहार्थं तत्प्रतीक्षाऽपि। तथा शुद्धमासप्रतीक्षयाऽपि क्रियमाणा न दुष्यतीति सगतिकत्वं द्रष्टव्यम्। आग्रयणस्य च पुराणान्नलाभे सगतिकत्वं तदभावेऽगतिकत्वम्॥ २५॥

द्वयं नैमित्तिकं तस्य व्यवस्था नित्यवन्मता।

नित्यवदिति। यथा नित्यमगतिकं कार्यं सगतिकं न कार्यं तथा नैमित्तिकमपीत्यर्थः। एवं चाऽऽवश्यकं काम्यमनन्यगतिके नित्यनैमित्तिके मलमासे कार्ये नेतराणीति वर्ज्यावर्ज्यविवेकः संपन्नः। तत्र कार्याणि कालादर्शे दर्शितानि—द्वादशाहसपिण्डान्तं कर्म ग्रहणजन्मनोः। सीमन्ते पुंसवे श्राद्धं द्वावेतौ जातकर्म च। श्राद्धं नान्दीश्राद्धम्। द्वावेतौ सीमन्तपुंसवौ। रोगे शान्तिरलभ्ये च योगे श्राद्धं व्रतानि च। प्रायश्चित्तं निमितस्य वशात्पूर्वे परत्र च। अब्दोदकुम्भमन्वादिमहालययुगादिषु। श्राद्धं दर्शेष्वहरहः श्राद्धमूनादिमासिकम्। मलिम्लुचान्यमासेषु मृतानां श्राद्धमाह्निकम्। श्राद्धं तु पूर्वदृष्टेषु तीर्थेष्वेवं युगादिषु। मन्वादिषु च यद्दानं दानं दैनंदिनं च यत्। तिलगोभूहिरण्यानां संध्योपासनयोः क्रिया। पर्वहोमश्चाऽऽग्रयणं साग्नेरिष्टिश्च पर्वणोः। नित्याग्निहोत्रहोमश्च देवतातिथिपूजनम्। स्नानं च स्नानविधिनाऽप्यभक्ष्यापेयवर्जनम्। तर्पणं च निमित्तस्य नियतत्वादुभयत्र च। अनित्यमनिमित्तं च दानं च महदादिकम्। महदादिकं षोडशमहादानादि। अग्न्याधानाध्वरापूर्वतीर्थयात्राऽमरेक्षणम्। देवारामतडागादिप्रतिष्ठामौञ्जिबन्धनम्। आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः। राज्याभिषेकः प्रथमश्चूडाकर्म व्रतानि च। अन्नप्राशनमारम्भो गृहाणां च प्रवेशनम्। स्नानं विवाहो नामातिपन्नं देवमहोत्सवम्। व्रतारम्भसमाप्ती च कर्म काम्यं च पाप्मनाम्। प्रायश्चित्तं तु सर्वेषां मलमासे विवर्जयेत्। उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम्। अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः। ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम्। दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः। पूर्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकमिति। अत्र द्वादशाहेत्यारभ्य नित्यत्वादुभयत्र चेत्यन्तेन ग्रन्थेन कर्तव्यसंग्रहः। अनित्यमनिमित्तं चेत्यारभ्य वर्जयेदित्यन्तेन वर्ज्यसंग्रहः। उपाकर्मेत्यारभ्य परत्रान्यच्च दैविकमित्यन्तेन मलमासवर्जितानां सतां शुद्धमासेऽवश्यकर्तव्यत्वेन संग्रहः। अत्र सर्वत्र साक्षिवचनान्युदाहरिष्यामः। गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके। सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत्। तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः। जातकर्मान्त्यकर्माणि

नवश्राद्धं तथैव च । मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश । चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम् । कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथेति । मासिके श्राद्धकर्मणि । अमावास्याश्राद्धकर्मणीत्यर्थः । होमोऽत्रौपासनहोमः । अन्त्यकर्माणि दहनोदकपिण्डदानास्थिसंचयनादीनि । स्मृत्यन्तरे—श्राद्धजातकनामानि ये च संस्कारसव्रताः । मलिम्लुचेऽपि कर्तव्या इष्टीः काम्याश्च वर्जयेदिति । संस्कारा अन्नप्राशननिष्क्रमणादयः । सव्रताश्चातुर्मास्यादयः । गभस्तिः—

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तत्कार्यं पूर्वमासे च कालाधिक्ये च धर्मतः ॥ इति ।

मरीचिः—रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि च ।
यद्ददाति समुद्दिष्टं पूर्वत्रापि न दुष्यति ॥ इति ।

ननु संग्रहवचने महालयश्राद्धस्याप्युभयत्र कर्तव्यतोक्ता । महालययुगादिष्वित्युक्तेः । सा वचनान्तरविरुद्धा । महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् । स्पष्टमासविशेषाख्याविहितं वर्जयेन्मल इति निषेधात् । नागरखण्डेऽपि—

नभो वाऽथ नभस्यो वा मलमासो यदा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥ इति ।

अत्र सप्तमपञ्चमावाषाढीमवधिं कृत्वा द्रष्टव्यौ । अत्र महालयशब्देन तीर्थविशेषस्य विवक्षितत्वात् ।

**शुद्धमासमृतानां तु मलिने प्रथमाब्दिकम् ॥ २६ ॥**
**मलमासमृतानां तु मले स्यादाब्दिकान्तरम् ।**

शुद्धमासमृतानामिति । तथा च हारीतः—असंक्रान्ते हि कर्तव्यमाब्दिकं प्रथमं द्विजैरिति । तथा—प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरमिति । अत्र द्वादशे मासि पूर्णे सत्यनन्तरदिने कार्येति व्याख्येयम् । एवं त्रयोदश इत्यत्रापि । आब्दिकतिथेर्द्वितीयवर्षादावेव संभवात् । मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि । प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुरिति व्यासवचनात् । तस्माच्छुद्धमासमृतानां प्रथमाब्दिकं मल एव कार्यम् । द्वितीयाब्दिकं तु शुद्ध एवेति व्यवस्थयोभयत्र कर्तव्यता ज्ञेया ॥ २६ ॥

मलमासमृतानां तु यदि कदाचित्स एव मलमास आगतस्तदा तत्रैव प्रत्याब्दिकं मलमासे कर्तव्यं नतूपरितने शुद्धमासि । तथा च भृगुः—

मलमासमृतानां तु यच्छ्राद्धं प्रतिवत्सरम् ।
मलमासे तु तत्कार्यं नान्येषां तु कदाचनेति ॥
तथा मलमासमृतानां तु सौरमानं समाश्रयेत् ।
स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु ॥ इति ।

तदेवं किंचिन्मलमास एव कार्यं यथा शुद्धमासमृतानां प्रथमाब्दिकं मलमासमृतानामाब्दिकान्तरं च। किंचित्तु शुद्ध एव। यथोपाकर्मादि सामगातिरिक्तानां, सामगानां तु मल एव। सिंहस्थे रवौ तद्विधानात्। सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः। छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वच्छन्दसाम्। शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकमिति गार्ग्यवचनात्। प्रथमोपाकरणं तु तेषामपि मले निषिद्धम्। प्रथमोपाकृतिर्न स्यात्कृतकर्मविनाशकृदिति वचनात्। एवं च—दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु। उपाकर्ममहाषष्ठ्योर्ह्येतदुक्तं वृषादितः। इति वचनेनोपाकर्मणोऽनुत्कर्षाभिधानं सामगविषयमेव ज्ञेयम्। प्रकृतमनुसरामः। किंचिदुभयत्रापि कार्यं—यथाऽब्दोदकुम्भादि। किंचिदन्यतरस्मिन्निमित्तवशात्कर्तव्यम्। यथा द्वादशाहसापिण्डीकरणादि। किंचिन्मलमासे वर्ज्यम्। यथाऽनित्यमनिमित्तं चेत्यादीति संक्षेपः॥

दैवे मुख्यः शुक्लपक्षः कृष्णः पित्र्ये विशिष्यते॥ २७॥

अथ पक्षः। दैव इति। दैवे यागादिकर्मणि शुक्लपक्षः प्रशस्तः। यं कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेद्वसीयानेव भवतीति श्रुतेः। वसीयान्वसुमत्तरः। पित्र्ये कर्मणि तु कृष्णपक्षः प्रशस्तः। यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ( म० स्मृ० ३। २७८ )। पित्र्य इत्याह मनुः॥ २७॥

तृतीये तु प्रकरणे वर्णिता प्रतिपत्तिथिः।
प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला॥ २८॥

तृतीये त्विति। प्रथमकलानिष्पत्तिपरिमितः कालः प्रतिपत्तिथिस्तावती। एवं द्वितीयादिष्वपि द्रष्टव्यम्। तथा च स्कान्दे—

अमा षोडशभागेन देवि प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥
अमादिपौर्णिमास्यन्ता या एव शशिनः कलाः।
तिथयस्ताः समाख्याताः षोडशैव वरानने॥ इति।

अयमर्थः—या महामाया आधारशक्तिरूपा देहिनां देहधारिणी संस्थिता सा चन्द्रमण्डलस्य षोडशभागेन परिमिता चन्द्रदेहधारिणी अमानाम्नी महाकलेति प्रोक्ता। क्षयोदयरहिता नित्या तिथिसंज्ञकैव। इतरा अपि पञ्चदश कला दिवसव्यवहारोपयोगिन्यः क्षयोदयवत्यः पञ्चदश तिथयो भवन्तीति। तिथयः षोडशैवेत्यविरुद्धं वचनमिति॥ २८॥

शुक्लपक्षे विशेच्चन्द्रं कृष्णपक्षे विनिःसरेत्।

शुक्लपक्ष इति। वह्निना पीता प्रतिपत्कला शुक्लपक्षे चन्द्रं पुनः प्रविशति। कृष्णपक्षे च ततो विनिःसरति। वह्न्यादिदेवतानां कलापानं सोमोत्पत्तौ पठ्यते। प्रथमां पिबते वह्निर्द्वितीयां पिबते रविरित्यादिना पञ्चदशीं प्रजापतिरित्यन्तेन॥

इदानीं सर्वतिथिसाधारणी परिभाषोच्यते—

शुद्धा विद्धा तिथिः शुद्धा हीना तिथ्याऽन्ययाऽह्नि ॥२९॥

शुद्धेति । शुद्धा विद्धा चेति तिथिर्द्विधा । अन्यतिथ्या उदयास्तमयान्तराले रहिता शुद्धेत्यर्थः ॥ २९ ॥

विद्धां लक्षयति—

उदये पूर्वया तिथ्या विध्यते त्रिमुहूर्तकैः ।
सायं तूत्तरया तद्वन्न्यूनया तु न विध्यते ॥ ३० ॥

उदय इति । सूर्योदये पूर्वया तिथ्या त्रिमुहूर्तमितयोत्तरा तिथिर्विध्यते । तथा सायं त्रिमुहूर्तमितयोत्तरया विध्यते नतु न्यूनयेत्यर्थः ॥ ३० ॥

वेध्याऽपि त्रिमुहूर्तैव न न्यूना वेधमर्हति ।

वेध्याऽपीति । त्रिमुहूर्तपरिमितैव दिने विद्यमाना विद्धा भवति न न्यूनेत्यर्थः । तथा च पैठीनसिः—

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥ इति ।

तथा—उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोरिति विष्णुधर्मोत्तरे वचनात् । अह्नः संबन्धि द्विमुहूर्तं त्रिमुहूर्तं चेत्यन्वयः । दैवतं देवकर्मयोग्यं पित्र्यं पितृकर्मयोग्यम् । अतः सा तिथिः क्रमेण हव्यकव्ययोर्ग्राह्येत्यर्थः । द्विमुहूर्तमित्यनुकल्पः । तथा पौर्वाह्णिकास्तु तिथयो दैवे कार्याः प्रयत्नत इति वृद्धयाज्ञवल्यवचनादपि त्रिमुहूर्तसत्त्वमावश्यकम् । पूर्वाह्णशब्दस्याह्नः पूर्वो भाग इति व्युत्पत्त्या दिनाद्यभागवचनत्वात्तस्य च पञ्चधाविभागे त्रिमुहूर्तात्मकत्वात् ॥

शुद्धायां नास्ति संदेहो दैवे पित्र्ये च कर्मणि ॥ ३१ ॥

शुद्धायामिति । दिनद्वयसत्त्वे हि संदेहः । तदभावान्न संदेह इत्यर्थः ॥ ३१ ॥

उपवासश्चैकभक्तं नक्तं चायाचितं व्रतम् ।
दानं च षड्विधं दैवं क्रमादत्र विविच्यते ॥ ३२ ॥

व्रतमिति । पूजादिरूपमित्यर्थः ॥ ३२ ॥

एकोद्दिष्टं पार्वणं च पित्र्यं द्विविधमुच्यते ।
शुक्लपक्षे दर्शविद्धा कृष्णे विद्धा द्वितीयया ॥ ३३ ॥
उपोष्या प्रतिच्छुक्ले मुख्या स्यादापराह्णिकी ।
तदभावे तु सायाह्नव्यापिनी परिगृह्यताम् ॥ ३४ ॥

एकोद्दिष्टमिति । एकदेवत्यमित्यर्थः । पार्वणं त्रिदेवत्यम् । उपवासे प्रतिपन्निर्णयमाह— शुक्लपक्षइति । तथा च पैठीनसिः—पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिरिति । संमुखत्वं च स्कान्दे विवेचितम्—संमुखी नाम सायाह्नव्यापिनी दृश्यते यदा । प्रतिपत्संमुखी कार्या या भवेदापराह्णिकीति । व्यासोऽपि—प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी । दैवं कर्म तदा ज्ञेयं पित्र्यं वा मनुरब्रवीत् ॥ ३३ ॥ ३४ ॥

सायाह्नादयः सावनदिवसस्य भागविशेषा इत्याह—

प्रातःसंगवमध्याह्नापराह्णाः सायमित्यसौ ।
अत्राह्नः पञ्चधा भागो मुख्यो द्वित्र्यादिभागतः ॥ ३५ ॥

प्रातरिति । मुख्यः श्रेष्ठः । द्वित्र्यादीति । द्वेधा त्रेधा चतुर्धेति विभागेभ्य इत्यर्थः । तथा च सूर्योदयमारभ्य मुहूर्तत्रयं प्रातर्भागः । तदूर्ध्वं मुहूर्तत्रयं संगवः । ततो मुहूर्तत्रयं मध्याह्नः । ततो मुहूर्तत्रयमपराह्णः । ततो मुहूर्तत्रयं सायाह्नः । तथा च व्यासः—

मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः ।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णोऽपि तादृशः ॥
सायाह्नस्त्रिमुहूर्तस्तु सर्वधर्मबहिष्कृत इति ।

मुहूर्तेतिशब्देन च दिनस्य पञ्चदशो भाग उच्यते । तस्य च दिनवृद्धिह्रासाभ्यां वृद्धिह्रासौ ज्ञेयौ । एवं सति यदा प्रतिपद्दर्शदिनेऽस्तात्पूर्वं त्रिमुहूर्तपरिमिता परेद्युश्चास्तमयात्प्राक् त्रिमुहूर्तं प्रविष्टया द्वितीयया विद्धा भवति तदा दर्शविद्धा ग्राह्या । सा च पूर्वदिनेऽपराह्णेऽपि यदि वर्तते तदा श्रेष्ठा । तदभावे सायाह्नमात्रव्यापिन्यपि ग्राह्येत्यर्थः । आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः पर इति स्कान्दे द्वेधा विभागो दर्शितः । तथा—ऊर्ध्वं सूर्योदयात्प्रोक्तं मुहूर्तानां तु पञ्चकम् । पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परम् । अपराह्णस्ततः प्रोक्तो मुहूर्तानां तु पञ्चकमिति त्रेधा विभागः । शातातपोऽपि—तस्मादह्नस्तु पूर्वाह्णे देवा अशनमभ्यवहरन्ति । मध्यंदिने मनुष्या अपराह्णे पितर इति चतुर्धा विभागमाह गोभिलः । पूर्वाह्णः प्रहरं सार्धं मध्याह्नः प्रहरं तथा । आ तृतीयादपराह्णः सायाह्नश्च ततः परमिति । एते च द्वेधा विभागादयो यत्र द्योतकं तत्रैव ग्राह्याः । अन्यत्र तु सर्वत्र पञ्चधा विभाग एवेति । एवं च प्रकृत उपवासे प्रतिपत्पूर्वा ग्राह्येति दर्शितम् । एकादशी तथा षष्ठी अमावास्या चतुर्थिका: । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुता इति वचनात् । यत्तु—प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युतेति तदुपवासेतरविषयम् ॥ ३५ ॥

अभावेऽपि प्रतिपदः संकल्पः प्रातरिष्यते ।
तिथिक्षियामतोऽर्वाक्चेत्तिथ्यन्ते पारणं भवेत् ॥ ३६ ॥

अभावेऽपीति । पूर्वविद्धायाः प्रतिपदः प्रातरसत्त्वेऽपीत्यर्थः । संकल्प उपवासादेः । ननु प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकमिति वचनात्प्रतिपदश्च तत्राभावात्कथं संकल्पः स्यादिति चेत् । ज्योतिःशास्त्ररीत्या प्रातरसत्त्वेऽपि धर्मशास्त्ररीत्या सत्त्वात् । तथा च देवलः—

यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥ इति ।

अत्र कर्मस्विति बहुवचनात्सकलदैवकर्मविषयत्वम् । अत्रास्तमयात्पूर्वं मुहूर्तत्रयव्यापिनीं तिथिं समनुप्राप्येति विवक्षितम् । अन्यथा पूर्वविद्धत्वाभावेनोत्तरतिथेरेव ग्राह्यत्वप्रसङ्गात् । अत एव शिवरहस्ये—

यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तिका ।
धर्मकृत्येषु सर्वेषु संपूर्णां तां विदुर्बुधाः ॥ इति ।

ननु खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् । खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकीति वचनात्कुतो न निर्णयः क्रियत इति चेत् । मैवम् । खर्वादिवाक्यस्यैकोद्दिष्टादिश्राद्धविषयत्वात् । तथा च व्यासः—द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदनेति । नियमादिष्वित्यादिशब्देन पित्र्यकर्मव्यतिरिक्तव्रतोपवासादिसकलकर्मणो ग्रहणम् । एकोद्दिष्टादीत्यादिशब्देन विवाहादिमङ्गलाङ्गभूतश्राद्धव्यतिरिक्तपार्वणश्राद्धस्य, वृध्यादावित्यादिशब्देन माङ्गलिकश्राद्धस्य च ग्रहणम् । खर्वः साम्यम् । दर्पो वृद्धिः । हिंसा क्षयः । तदेवं पूर्वेद्युः शुक्लप्रतिपदुपवासं कृत्वा परेद्युः पारणं कुर्यात् । तच्च तिथ्यन्ते विहितम् । तथा च सुमन्तुः—तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् । त्रियामादूर्ध्वं तिथ्यन्तलाभे तु प्रातरेव च पारणमित्यर्थः । यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणमिति वचनात् । एवं शुद्धायां परविद्धायां वोपवासेऽपि प्रातरेव पारणम् । उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् । अन्यथा तु फलस्यार्धं धर्ममेवोपसर्पतीति देवलवचनात् । धर्मो यमः । तथा एकभक्तनक्तायाचितानि यां तिथिमुद्दिश्य विहितानि परेद्युस्तत्तिथ्यन्ते पारणं कार्यम् । तिथीनामेव सर्वासामुपवासव्रतादिषु । तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीमिति स्कान्दवचन आदिपदेनैकभक्तादीनामुपादानात् ॥ ३६ ॥

बल्युत्सवं च पूर्वेद्युरुपवासवदाचरेत् ।

पूर्वेद्युः पूर्वविद्धायां प्रतिपदि यथोपवासः क्रियते तथा बल्युत्सवं च कुर्यादित्यर्थः । बल्युत्सवश्च बलिपूजारूपः कार्तिकशुक्लप्रतिपदि ब्रह्मपुराणादौ विहितो ज्ञेयः ।

मुख्यतिथ्यन्तराये तु तिथिशेषोऽपि गृह्यताम् ॥३७॥

शुद्धाधिका तु कृष्णाऽपि पूर्वा संपूर्तिसंभवात्।
ग्रहीतव्या एकभक्ते मध्याह्नव्यापिनी तिथिः॥ ३८॥
परेद्युरेव पूर्वेद्युरेव व्याप्तिर्दिनद्वये।
नोभयत्रोभयत्रांशे साम्यं वैषम्यमित्यमी॥ ३९॥
षट् पक्षास्तेषु चैकैकव्याप्तौ सैवात्र गृह्यताम्।
दिनद्वयेऽपि तद्व्याप्तावव्याप्तौ चैकदेशतः॥ ४०॥
समव्याप्तौ च पूर्वैव वैषम्ये त्वधिकेष्यताम्।
अन्याङ्गस्यैकभक्तस्य कालस्त्वङ्ग्यनुसारतः॥ ४१॥
उपवासप्रतिनिधिस्तिथिः स्यादुपवासवत्।

मुख्येति। मुख्यातिथेः पूर्वविद्धाया अन्तराये तत्र कर्माकरणे तिथिशेषोऽपि परेद्युः पूर्वाह्णे विद्यमानो ग्राह्यः। पौर्वाह्णिकास्तु तिथयो दैवे कार्ये फलप्रदा इति वचनादिति भावः॥ ३७॥

शुद्धाधिका त्विति। शुद्धा संपूर्णा सति अधिका परेद्युस्त्रिमुहूर्ता कृष्णाऽपि प्रतिपत्पूर्वैव ग्राह्या। संपूर्णत्वस्य संभवादित्यर्थः। एकभक्ते तिथिनिर्णयमाह—ग्रहीतव्येति। एकभक्तं च स्कान्दे दर्शितम्। दिनार्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हीति। अत्र च दिनार्धस्योपरि सार्धमुहूर्तपरिमितः कालः पञ्चधा विभागे मध्याह्नस्यापरभाग एकभक्तस्य मुख्यः कालः। दिनार्धेऽतीते समनन्तरभावित्वात्। अस्तमयात्प्राचीनोऽवशिष्टो गौणः कालः। दिवैवेत्यभ्यनुज्ञानात्। एवं च मध्याह्नस्य कर्मकालत्वात्तद्व्यापिनी तिथिरेकभक्ते ग्राह्या। कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः। तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति वचनात्। मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिरिति वचनाच्च॥ ३८॥

अत्र मध्याह्नव्याप्तिः षड्विधेत्याह—परेद्युरेवेति। परेद्युरेव मध्याह्नव्याप्तिः पूर्वेद्युरेव वा। उभयत्रापि तद्व्याप्तिरव्याप्तिर्वा। उभयत्र साम्येन तदेकदेशव्याप्तिर्वैषम्येण वेति॥ ३९॥

एतेषु पक्षेषु मध्य एकैकस्मिन्नेव दिने मध्याह्नव्याप्तौ सैव ग्राह्या। इतरपक्षेषु साम्यपर्यन्तेषु पूर्वैव। गौणकालव्याप्तिलाभात्। वैषम्ये त्वधिकव्यापिनी ग्राह्या॥ ४०॥

अन्याङ्गस्येति। यत्र प्रधानपूजादिकं मध्याह्ने विहितं तदङ्गं चैकभक्तं तत्र प्रधानानुसारेणाङ्गभूतस्यैकभक्तस्य प्रधानदिन एव तदुत्तरमनुष्ठानं कार्यम्. उपवासप्रतिनिधित्वेन विहितं त्वेकभक्तमुपवासतिथौ कार्यमित्यर्थः। इत्येकभक्तनिर्णयः॥ ४१॥

अथ नक्तं निर्णीयते—

प्रदोषव्यापिनी नक्ते तिथिः ।

प्रदोषव्यापिनीति । तत्र वराहपुराणे—मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् । तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं प्रपूजयेत् । नक्तकालो भविष्यत्पुराणे—मुहूर्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः । नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिपेति । अस्य च कालद्वयस्याधिकारिभेदेन व्यवस्थामाह देवलः—नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम् । यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते ॥ इति । स्मृत्यन्तरेऽपि—नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः । यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् । सदिवाक-(सभास्क)रं तत्प्रोक्तमन्तिमे घटिकाद्वये । निशानक्तं तु विज्ञेयं यामार्धे प्रथमे सदेति । रात्रिनक्तभोजने व्यासः—त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तं गते सति । नक्तं तु तत्र कुर्वीत इति शास्त्रस्य निश्चय इति । तदेवं नक्तकालौ व्यवस्थितौ । तत्र नक्तं प्रदोषव्यापिन्यां तिथ्यां कार्यम् । तदाह वत्सः—प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः । एकादशीं विना सर्वा शुक्ले कृष्णे तथा स्मृता ॥ इति । एकादश्यां तु यन्नक्तं तत्रोदयव्यापिनी तिथिर्ग्राह्या । तदुक्तं स्कान्दे—प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः । त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तं गते सति । नक्तं तत्र तु कर्तव्यमिति शास्त्रविनिश्चयः ॥ इति व्यासोक्तेः पारिभाषिको ज्ञेयः ।

व्याप्तिर्दिनद्वये ॥ ४२ ॥

अव्याप्तिर्वाऽथवांऽशेन व्याप्तिः स्यात्सर्वथोत्तरा ।

सौरनक्ते तु सायाह्नव्यापिनी न प्रदोषगा ॥ ४३ ॥

अत्र पूर्ववत्प्रदोषव्याप्तौ षट् पक्षा इत्याह—व्याप्तिर्दिनद्वय इति । तत्रैकदिनव्याप्तौ संशयाभावात्पक्षद्वयं त्यक्तम् । तत्र दिनद्वयव्याप्तौ जाबालिः—

सदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः ।
तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः ॥ इति ।

उभयत्रापि दिवा रात्रौ च सा तिथिर्विद्यते यत इत्यर्थः ॥ ४२ ॥

उभयत्र प्रदोषव्याप्त्यभावे परैवेत्याह जाबालिः—अतथात्वे परत्र स्यादस्तादर्वाग्यतो हि सेति । अतथात्व उभयत्र प्रदोषव्याप्त्यभावे । तेन सायाह्नव्याप्तिर्गौणकल्प इत्याभिप्रायः । एवं च गृहस्थोऽप्येतादृशविषये दिवानक्तमाचरेत् । प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते । आत्मनो द्विगुणच्छायामतिक्रामति भास्करे । तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् । एवं ज्ञात्वा ततो विद्वान्सायाह्ने तु भुजिक्रियाम् । कुर्यान्नक्तव्रती नक्तं फलं भवति निश्चितमिति । यत्तु सप्तमीभानुवारादौ रविनक्तं विहितं तत्र पूर्वोक्तविपर्ययेण सायंकालव्याप्तिर्मुख्यः कल्पः । प्रदोषव्याप्तिरनुकल्पः । अत एव सुमन्तुः—त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः । तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनमिति । अत्र सायंव्याप्ते-

मुख्यकालत्वात्प्रथमतो निर्देशः । प्रदोषव्याप्तेरनुकल्पत्वात्पश्चान्निर्देशः । यदा रविवारादौ रात्रिभोजननिषेधस्तत्र गृहस्थोऽपि दिवैव नक्तं कुर्यात् । तथा च भविष्यत्पुराणे—

ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः ।
दिनान्ते तेऽपि भुञ्जीरन्निषेधाद्रात्रिभोजने ॥ इति ।

अस्मिंश्च दिवाभोजन उत्तमोऽन्तिममुहूर्तो मध्यम उपान्त्यस्ततः प्राचीनो जघन्यः । एवं च सत्यन्तिमभागत्रिमुहूर्तवचनान्युपपद्यन्ते । रात्रिभोजनेऽपि घटिकात्रयमुत्तमः कालः । घटिकाषट्कं मध्यमः कालः । अत्राप्यन्याङ्ग उपवासस्थानीये च पूर्वोक्त एव निर्णयः । तथा रथसप्तमीव्रते तृतीयादिषु सप्तम्यन्तेषु पञ्चसु दिनेषु क्रमेणैकभक्तनक्तायाचितोपवासपारणानि विहितानि । तत्र यदा तृतीया यामत्रयपरिमिता तत ऊर्ध्वं चतुर्थी तदैकभक्तनक्तयोरेकस्मिन्दिवसे प्राप्तौ प्राथम्यादेकभक्तस्य मुख्यकालेऽनुष्ठानम् । नक्ते त्वनुकल्पः । स च द्विविधः । दिनान्तरानुष्ठानात्कर्त्रन्तरानुष्ठानाच्च । यदा तु चतुर्थी परेद्युर्वृद्ध्या सायंकालं व्याप्नोति तदा तस्य गौणकालत्वादेक एव कर्ता दिनभेदेन व्रतद्वयमनुतिष्ठेत् । यदा चतुर्थी समा क्षीणा वा तदा गौणकालस्याप्यसंभवेन पूर्वेद्युरेव भार्यापुत्रादिना कर्त्रन्तरेण तन्नक्तं करणीयम् ॥ ४३ ॥ इति नक्तनिर्णयः ।

अयाचिते तु तिथयः स्वीकार्या उपवासवत् ।
सोदयत्रिमुहूर्तायां कुर्याद्दानं व्रतानि च ॥ ४४ ॥
उभयत्र तथात्वे तु पूर्वेद्युस्तदनुष्ठितिः ।
परत्रैव तथात्वं चेत्पूर्वा ग्राह्या तिथिक्षये ॥ ४५ ॥
तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा ।
अस्पर्शे चैकदेशस्य व्याप्तौ पूर्वैव गृह्यताम् ॥ ४६ ॥
एकोद्दिष्टे तु मध्याह्नयुक्ता स्यादेकभक्तवत् ।
एकदेशे समव्याप्तौ क्षये पूर्वाऽन्यथोत्तरा ॥ ४७ ॥

अयाचिते त्विति । याचितं तु याचितभोजननिषेधरूपम् । याचितादन्यदयाचितमिति । उभयत्राप्युपवासवत्तिथिर्ग्राह्येत्यर्थः । सोदयेति । उदयमारभ्य त्रिमूहूर्तं वर्तमानायामित्यर्थः । तदाह वृद्धयाज्ञवल्क्यः—पौर्वाह्णिकास्तु तिथयो दैवे कार्ये फलप्रदा इति ॥ ४४ ॥

उभयत्रेति । दिनद्वये पूर्वाह्णव्याप्तौ पूर्वेद्युस्तदनुष्ठानम् । परत्रैव तद्व्याप्तौ तिथिक्षये पूर्वा । साम्यवृद्ध्योस्तु परा । दिनद्वयेऽपि पूर्वाह्णव्याप्तावेकदेशव्याप्तौ च पूर्वा ग्राह्येति ॥ ४५ ॥ ४६ ॥ इति दानव्रतनिर्णयः ।

अथ पित्र्यं निर्णीयते—एकोद्दिष्टे त्विति । एकमुद्दिश्य क्रियमाणं श्राद्धमेकोद्दिष्टम् । त्रीनुद्दिश्य क्रियमाणं पार्वणम् । तदाह कण्वः—एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितम् । त्रीनुद्दिश्य तु यत्श्राद्धं पार्वणं मुनयो विदुरिति । तत्रैकोद्दिष्टे मध्याह्नव्यापिनी पार्वणेऽपराह्णव्यापिनी थितिर्ग्राह्या । तथा च गौतमः—मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् । अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेदिति । हारीतोऽपि—आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यमे । पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति । मध्याह्नश्च सप्तमाष्टमनवममुहूर्तात्मकः । तत्रैकदिने मध्याह्नव्याप्तौ न संदेहः । दिनद्वये तद्व्याप्तौ पूर्वः । अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी । सा ग्राह्या पितृकार्येषु न पूर्वाऽस्तानुयायिनीति हारीतवचनात् ।

यस्यामस्तं रविर्याति पितरस्तामुपासते ।
तिथिं तेभ्यो यतो दत्तो ह्यपराह्णः स्वयंभुवा ॥

इति बृहन्मनुवचनाच्च । एकदेश इति । क्षये तिथिक्षये । अन्यथा वृद्धिसाम्ययोर्वैषम्यैकदेशव्याप्तौ त्वधिकव्यापिनी ग्राह्या ॥ ४७ ॥

कुतपाद्यपराह्णान्तव्याप्तिराब्दिक उत्तमा ।
तदभावेऽपराह्णस्य व्यापिका गृह्यतां तिथिः ॥ ४८ ॥
क्षये पूर्वोत्तरा वृद्धौ व्याप्तिश्चेदपराह्णयोः ।
न ग्राह्यातिथिगौ वृद्धिक्षयावूर्ध्वतिथेस्तु तौ ॥ ४९ ॥
साम्ये तूर्ध्वतिथेर्ग्राह्या परविद्धैव वृद्धिवत् ।
न स्पृशेदपराह्णौ चेत्पूर्वा स्यात्कुतपो वृथा ॥ ५० ॥
वैषम्येणैकदेशस्य व्याप्तौ ग्राह्या महत्त्वतः ।
साम्येन चेत्क्षये पूर्वा परा स्याद् वृद्धिसाम्ययोः ॥ ५१ ॥
वृद्धिसाम्यक्षया ग्राह्यतिथिगा नोर्ध्वगा इह ।

पार्वणे निर्णयमाह—कुतपादीति ।

अष्टमे भास्करो यस्मान्मन्दी भवति सर्वदा ।
तस्मादनन्तफलदस्तत्राऽऽरम्भो विधीयते ॥
ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥ इति मात्स्यात् ।

तदभाव इति । मुहूर्तपञ्चकव्याप्त्यभाव इत्यर्थः । पित्रर्थे चाऽऽपराह्णिकीति सामान्यवचनादिति भावः ॥ ४८ ॥

क्षय इति । उभयत्रापराह्णव्याप्तौ तदभाव एकदेशसमव्याप्तौ च क्षये पूर्वा । पक्षान्तरे साम्यवृद्ध्योः परेत्यर्थः । अपराह्णद्वयव्यापिन्यतीतस्य यदा तिथिः । क्षये

पूर्वा च कर्तव्या वृद्धौ कार्या तथोत्तरा ॥ इति बौधायनवचनात् । न ग्राह्येति ।
अपराह्णद्वयव्याप्तेश्च तिथिवृद्धिनियतत्वे ग्राह्यतिथिक्षयासंभवादिति भावः ॥ ४९ ॥

वृद्धिवदेव साम्येऽपि परैवेत्याह—साम्ये त्विति । उभयत्रापराह्णव्याप्त्यभावे निर्णयमाह—न स्पृशेदपराह्णौ चेदिति । तदाह मनुः—

न व्यहव्यापिनी चेत्स्यान्मृताहे तु यदा तिथिः ।
पूर्वविद्धैव कर्तव्या त्रिमुहूर्ता भवेद्यदीति ॥ ५० ॥

वैषम्येणेति । तथा च मरीचिः—व्यपराह्णव्यापिनी चेदाब्दिकस्य यदा तिथिः । महती यत्र तद्विद्धां प्रशंसन्ति महर्षयः ॥ इति । एकदेशसाम्येनोभयत्र व्याप्तौ त्वाह—साम्येन चेदिति । खर्वो दर्प इत्यादिवाक्यादित्यर्थः ॥ ५१ ॥

पूर्ववदत्रोत्तरतिथेर्वृद्ध्यादिकं न नियामकं किंतु ग्राह्यतिथेरेवेत्याह—वृद्धिसाम्ये-त्यादीति । इति माधवीयकारिकाविवरणे प्रतिपन्निर्णयाख्यं तृतीयं प्रकरणम् ॥ ३ ॥

**द्वितीयाद्यास्तु पर्वान्तास्तुर्यप्रकरणोदिताः ॥५२॥**
**संचारणीयः सामान्यात्तिथिषु प्रतिपन्नयः ।**
**क्वचित्क्वचिद्विशेषोऽस्ति सोऽयमत्राभिधीयते ॥ ५३ ॥**
**पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्तगा ।**
**सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽपरा ॥ ५४ ॥**

चतुर्थप्रकरणविषयमाह—द्वितीयाद्या इति ॥ ५२ ॥

तत्र प्रतिपदि यो नयो निर्णयः पूर्वमुक्तः स एव समानत्वादुत्तरासु सर्वतिथिषु संचारयितव्य इत्याह—संचारिणीय इति । अत्रेति । अस्मिन्प्रकरण इत्यर्थः ॥ ५३ ॥

पूर्वेद्युरिति । युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा । प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् । एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम् । इति । युग्मं द्वितीया । अग्निस्तृतीया । युगं चतुर्थी । भूतं पञ्चमी । षट् षष्ठी । मुनिः सप्तमी । वसुरष्टमी । रन्ध्रं नवमी । रुद्र एकादशी । अत्र युग्माग्न्यादिसप्तसु युग्मेषु पूर्वा तिथिरुत्तरविद्धा ग्राह्या । उत्तरा पूर्वविद्धेत्युक्तं भवति । एवं च द्वितीया तृतीयाविद्धा ग्राह्येत्यर्थः । उपवास-विषयं चेदम् ।

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयोदशी चतुर्थी च उपोष्याः स्युः परान्विताः ॥

इति वचनाज्ज्ञेयम् । ततोऽपरा भिन्ना पूर्वविद्धैव ग्राह्या । सा यथा—पूर्वे-द्युरुदयमारभ्य प्रवृत्ता द्वितीयदिनेऽपि त्रिमुहूर्ता सा पूर्वैव । संपूर्णत्वेन संदेहा-

भावात् । तथा परेद्युस्त्रिमुहूर्तमिताया अभावेऽपि पूर्वैवेति ज्ञेयम् । यदाऽपि पूर्वेद्युः पूर्वाह्णैकदेशमारस्य परेद्युस्त्रिमुहूर्ताऽपि सा पूर्वैव । प्रतिपत्संमुखी कार्या या भवेद्पराह्णिकी । पौर्वाह्णिकी च कर्तव्या द्वितीया तादृशी विभो ॥ इति स्कान्दात् ॥ ५४ ॥ इति द्वितीयानिर्णयः ।

रम्भा तृतीया पूर्वा स्यादुत्तरा स्याद्व्रतान्तरे ।
परेऽह्नि नास्ति चेत्पूर्वविद्धाऽप्यस्तु व्रतान्तरे ॥ ५५ ॥
मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।
शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् ॥ ५६ ॥
चतुर्थी तु परोपोष्या गणनाथव्रतस्य तु ।
मध्याह्नव्यापिनी पूज्या तद्वन्नागचतुर्थ्यपि ॥ ५७ ॥
परेद्युरेव मध्याह्नव्याप्तौ विघ्नस्य सोत्तरा ।
अन्यथा पूर्वविद्धैव मातृयोगप्रशस्तितः ॥ ५८ ॥

तृतीयानिर्णयमाह—रम्भेति । रम्भाव्रतं च—भद्रे कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम् । ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परेति स्कान्दाज्ज्ञेयम् । तत्र तृतीया पूर्वविद्धा ग्राह्या । बृहत्तपा तथा रम्भा सावित्री वटपैतृकी । कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिरिति तत्रैवोक्तम् । व्रतान्तरे तु तृतीया चतुर्थीयुता ग्राह्या । रम्भाख्यं वर्जयित्वा तु तृतीया द्विजसत्तम । अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ॥ इति ब्रह्मवैवर्तात् । गणो गणेशः । तद्वत्त्या चतुर्थी तद्युक्तेत्यर्थः । अत्र द्वितीयावेधः कलामात्रोऽपि निषिद्धः । चतुर्थीयोगश्च कलामात्रोऽपि ग्राह्यः । कला काष्ठाऽपि या चैव द्वितीया यत्र दृश्यते । सा तृतीया न कर्तव्या कर्तव्या गणसंयुतेति स्कान्दात् । द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु यः । स याति नरकं घोरं कालसूत्रं भयंकरम् ।

द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥

इति निन्दार्थवादे शेषशब्दश्रवणाच्च ॥ ५५ ॥

एतच्च गौरीव्रत एव । तथा शिष्टाचारात् । व्रतान्तरे तु त्रिमुहूर्त एव वेधो ज्ञेयः । तदाह—मुहूर्तमात्रेति । शुद्धाधिकायामिति । एवं परग्राह्यत्वमित्यर्थः ॥ ५६ ॥ इति माधवीयकारिकाविवरणे तृतीयानिर्णयः ।

अथ चतुर्थी निर्णीयते—चतुर्थी त्विति । युग्मवाक्यादिति भावः ।

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुता इति । बृहद्वसिष्ठवचनाच्च ।

द्वितीया पञ्चमीवेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥

इति वचनं तु परविद्धानिषेधकम् । तत्रेत्थं व्यवस्था—विनायकनागगौरीव्रतातिरिक्तेषु परा, विनायकादिव्रते तु मध्याह्नव्याप्तिनिर्णयात्कदाचित्पूर्वेद्युः प्राप्तौ तद्विषये पञ्चमीविद्धानिषेधो व्यवस्थाप्यः । विनायकव्रते मध्याह्नव्याप्तिमाह बृहस्पतिः—चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनीति । नागव्रतेऽपि—युगं मध्यंदिने यत्र तत्रोपोष्य फणीश्वरानिति वचनान्मध्याह्नव्यापित्वं द्रष्टव्यम् ॥५७॥५८॥

पूर्वेद्युरेव तद्व्याप्तौ पूर्वा सर्पप्रिया तिथिः ।
नो चेत्सर्पस्य पञ्चम्यां योगोऽत्यन्तं प्रशस्यते ॥ ५९ ॥
गौर्याः शुद्धजयाऽप्यस्तु नागविद्धा निषिध्यते ।
सर्वत्र पञ्चमी पूर्वा ग्राह्या स्कन्दव्रते परा ॥ ६० ॥
नागविद्धा स्कन्दषष्ठी सा निषिद्धा व्रतान्तरे ।
उत्तरस्या अलाभे तु नागविद्धाऽपि गृह्यताम् ॥ ६१ ॥
विना द्वादशनाडीभिर्नागवेधो न दोषकृत् ।

पूर्वेद्युरेवेति । तद्व्याप्तौ मध्याह्नव्याप्तौ । नो चेदिति । पक्षान्तरेष्वित्यर्थः । चतुर्थी पञ्चमीयुक्ता नागप्रीतिविवर्धिनी । प्रीताः स्युः पूजितास्तस्यां नागास्तांस्तत्र पूजयेदितिवचनादिति भावः ॥ ५९ ॥

गौर्या इति । जया च यदि संपूर्णा चतुर्थी ह्रसते पुनः । जया सैव हि कर्तव्या नागविद्धां न कारयेदिति वचनादित्यर्थः । इति माधवीयकारिकाविवरणे चतुर्थीनिर्णयः ।

अथ पञ्चमीनिर्णयमाह—सर्वत्रेति । युग्मभूतानामिति युग्मवाक्यादित्यर्थः ।

चतुर्थी संयुता कार्या पञ्चमी परया न तु ।
दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते ।

इति वचनाच्च । पञ्चमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारदेति वचनं तु स्कन्दोपवासविषयम् । स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुतेति वाक्यशेषात् ॥ ६० ॥ इति माधवीयकारिकाविवरणे पञ्चमीनिर्णयः ॥

अथ षष्ठीनिर्णयमाह—नागविद्धेति । तथा च वसिष्ठः—कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेदिति । सा निषिद्धेति । तथा च निगमः—

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः ॥ इति ।

रुद्रः—अष्टमी । दिवाकरः सप्तमी । कामस्त्रयोदशी । विष्णुर्द्वादशी । एवं च सति षण्मुन्योरिति युग्मवाक्यादपि व्रतान्तरे परा ग्राह्या ॥ ६१ ॥

नागवेधश्च षण्मुहूर्तपरिमितो बोध्यः । नागो द्वादशनाडीभिर्दिक्पञ्चदशाभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति स्कान्दादित्यभिप्रेत्याऽऽह—विनेति । इति माधवीयकारिकाविवरणे षष्ठीनिर्णयः ।

सप्तमी पूर्वविद्धैव व्रतेषु निखिलेष्वपि ॥ ६२ ॥
अलाभे पूर्वविद्धायाः परविद्धाऽपि गृह्यताम् ।
व्रतमात्रेऽष्टमी कृष्णा पूर्वा, शुक्लाष्टमी परा ॥ ६३ ॥
दूर्वाष्टमी तु शुक्लाऽपि पूर्वविद्धा विधीयताम् ।
पक्षद्वयेऽप्युत्तरैव शिवशक्तिमहोत्सवे ॥ ६४ ॥
ज्येष्ठर्क्षयोगे पूर्वैव ग्राह्या ज्येष्ठाव्रते तिथिः ।
मध्याह्नादूर्ध्वमृक्षं चेत् परेद्युः सा प्रशस्यते ॥ ६५ ॥
ज्येष्ठर्क्षभानुवाराभ्यां युक्ताऽष्टम्यतिदुर्लभा ।
जयन्त्याख्यं व्रतं भिन्नं कृष्णजन्माष्टमीव्रतात् ॥ ६६ ॥

अथ सप्तमीनिर्णयमाह—सप्तमीति । षण्मुन्योरिति युग्मवाक्यात् । षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाऽष्टमी । सप्तमी परविद्धा तु नोपोष्यं तिथिपञ्चकमिति वचनाच्च ॥ ६२ ॥ इति माधवीयकारिकाविवरणे सप्तमीनिर्णयः ।

अथाष्टमीनिर्णयमाह—व्रतमात्र इति ।

कृष्णपक्षेऽष्टमी या च कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्तव्या परविद्धा न कर्हिचित् ॥

उपवासादिकार्येषु ह्येष धर्मः सनातन इति निगमवचनात् । शुक्लाष्टमी तु वसुरन्ध्रयोरिति युग्मशास्त्रात् । शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुतेति निगमवचनाच्च परा ॥ ६३ ॥

दूर्वाष्टमी त्विति । श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या । पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनमिति पाद्मवचनादित्यर्थः । पक्षद्वयेऽपीति । शुक्ले कृष्णे चेत्यर्थः । अष्टमी नवमीविद्धा नवम्या चाष्टमी युता । अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः । अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः । शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपीति पद्मपुराणात् ॥ ६४ ॥

ज्येष्ठर्क्षेति । मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते । यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनमिति स्कान्दे ज्येष्ठाव्रतमुक्तम् । तत्र शुक्लाऽप्यष्टमी नक्षत्रवशात्पूर्वेत्यर्थः । नक्षत्रयोगाभावे तु शुक्लत्वात्परैव । मध्याह्नादिति ।

यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः ।
तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे ॥

इति स्कान्दादित्यर्थः ॥ ६५ ॥

ज्येष्ठर्क्षेति । नभोष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेव च । नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकेति स्कान्दादित्यर्थः । जन्माष्टमीनिर्णयमाह—जयन्त्याख्य-मिति । जयन्ती जन्माष्टमीति नामभेदात् । रोहिणीनक्षत्राष्टमीतिथिरूपनिमित्तभेदा-च्चेति भावः । एवं दानादिसहितोपवासपूजाप्रकारविशेषयुक्तं जयन्तीव्रतस्वरूपम् । उपवासमात्रस्वरूपं च जन्माष्टमीव्रतमिति ॥ ६६ ॥

शुद्धा च सप्तमीविद्धेत्येवं जन्माष्टमी द्विधा ।
सप्तमी चेन्निशीथात्प्राग्विद्धा, शुद्धाऽन्यथा भवेत् ॥ ६७ ॥
शुद्धायां नास्ति संदेहो विद्धा च त्रिविधेष्यते ।
निशीथयोगः पूर्वेद्युः परेद्युर्वा द्वयोरुत ॥ ६८ ॥
पूर्वैव प्रथमे पक्षे परैवोत्तरपक्षयोः ।
अष्टमी रोहिणीयुक्ता जयन्ती, सा चतुर्विधा ॥ ६९ ॥
शुद्धा शुद्धाधिकेत्येवं विद्धा विद्धाधिकेति च ।
शुद्धायामपि विद्धायां न संभाव्योत्तरा तिथिः ॥ ७० ॥
शुद्धाधिकायां योगश्चेदन्यस्मिन्वा दिनद्वये ।
नैकयोगेऽस्ति संदेहो द्वियोगे प्रथमं दिनम् ॥ ७१ ॥

निर्णयं वक्तुं भेदानाह—शुद्धा चेति । वेधे विशेषमाह—सप्तमी चेदिति । यद्यपि दिवैव वेधः पूर्वमुक्तस्तथाऽपि रात्रिप्रधाने कर्मणि रात्रिवेधोऽपि भवति ।

अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा ।
नक्तादिव्रतयोगेषु रात्रिवेधो विशिष्यते ॥

इति बौधायनादिवचनादिति भावः । अत्र चार्धरात्रस्य मुख्यकालत्वमुक्तं वासिष्ठसंहितायाम्—

अष्टमी रोहिणीयुक्ता निशार्धे दृश्यते यदि ।
मुख्यकाल इति ख्यातस्तत्र जातो हरिः स्वयमिति ।

अयं च वेधो ग्राह्याया अष्टम्या इष्यते । तथा च विष्णुधर्मोत्तरे—

रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ।
सप्तम्यामर्धरात्राधः कलयाऽपि यदा भवेत् ॥

तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः

तमेवोपवसेत्कालं तत्र कुर्याच्च जागरमिति ।

अर्धरात्रनिशीथपदाभ्यां च रात्रेरष्टममुहूर्तो मध्यगतोऽभिधीयते । तत्र सकलमुहूर्तव्याप्तिर्मुख्या । घटिकामात्रव्याप्तिस्तु मध्यमा प्रागुदाहृता । मध्यमोत्तमपक्षद्वयं तु योगीश्वर आह—अर्धरात्रादधश्चोर्ध्वमेकार्धघटिकान्विता । रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिष्विति । एका चार्धघटिका चैकार्धघटिके ताभ्यामान्विता । कलामपेक्ष्यार्धघटिका स्थूला । तामपेक्ष्य घटिका स्थूला । तत्रायमर्थः संपद्यते—पूर्वभागावसान एका घटिका उत्तरभागादौ चैका, मिलित्वा तन्निशीथयोग इति शब्दवाच्यं मुहूर्तं तावत्परिमाणं सर्वैरपि सुलभ्यत्वान्मुख्यः कल्पः । तदसंभवेऽर्धघटिकाऽन्वेष्टव्या । तस्याप्यसंभवे कलेति । अत्र जयन्त्यां चन्द्रार्घ्यस्यावश्यकर्तव्यत्वात् । तस्य च चन्द्रोदयोत्तरकालीनत्वान्निशीथयोगः प्रशस्तः । एतदेव विष्णुधर्मोत्तरेऽभिहितम्—अर्धरात्रे तु योगोऽयं तारापत्युदये तथा । नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्तयेदिति । निशीथयोग इति ॥ ६७ ॥ ६८ ॥

प्रथमपक्षे—पूर्वेद्युरेव निशीथयोगे । उत्तरपक्षयोः—परेद्युरेव द्वयोर्वा निशीथयोगे । रोहिणीयुक्ताया अष्टम्या भेदानाह—अष्टमीति ॥ ६९ ॥

तत्र भेदद्वये न संदेह इत्याह—शुद्धायामपीति ॥ ७० ॥

योगश्चेदिति । रोहिणीयोगश्चेदित्यर्थः । आद्ये न संदेह इत्याह—नैकयोग इति । तथा च यस्मिन्नेव दिने रोहिणीयोगः सैव ग्राह्येति । द्वियोगे द्वयोर्दिनयोर्योगे । प्रथममिति । संपूर्णत्वादित्यर्थः ॥ ७१ ॥

सदा निशीथे पश्चाद्वेत्युत्तमो मध्यमोऽधमः ।

योगस्त्रिधाऽपि पूर्वेद्युः संपूर्णत्वादुपोषणम् ॥ ७२ ॥

विद्धाधिकायामप्येकदिनयोगे स गृह्यताम् ।

द्वयोर्योगास्त्रिधा भिन्नो निशीथे वृत्तिभेदतः ॥ ७३ ॥

तद्वृत्तिर्दिन एकस्मिन्नुभयोर्नोभयोरिति ।

एकस्मिंश्चेत्तद्दिनं स्यात्पक्षयोरन्त्ययोः परम् ॥ ७४ ॥

बुधे सोमे जयन्ती चेद्वारे साऽतिफलप्रदा ।

तिथ्यर्क्षयोर्द्वयोरन्त उत्तमं पारणं भवेत् ॥ ७५ ॥

एकस्यान्ते मध्यमं स्यादुत्सवान्तेऽधमं स्मृतम् ।

यस्मिन्वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा ॥ ७६ ॥

योगश्च त्रिविध इत्याह—सदेत्यादि । निशीथे—अर्धरात्रे । पश्चान्निशीथा[ न ]न्तन्तरम् । एवं योगत्रैविध्येऽपि पूर्वमेव दिनं ग्राह्यम् ॥ ७२ ॥

चतुर्थपक्ष आह–विद्धाधिकायामिति । एकदिनयोग एकदिन एव योग इत्यर्थः । स एव योगो गृह्यतामित्यर्थः । दिनद्वययोगं विभजते––त्रिधेति ॥ ७३ ॥

तदेव विवृणोति––तद्वृत्तिरिति । एकस्मिन्नेव दिने निशीथे रोहिणीयोगः, उभयोर्दिनयोः स नोभयोः स इति । तत्र निर्णयमाह––एकस्मिंश्चेति । यस्मिन्नेव दिने विद्धाधिकायां निशीथे रोहिणीयोगस्तदेव दिनं ग्राह्यमित्यर्थः । अन्त्ययोरुभयोर्नो-भयोरिति पक्षयोः परं दिनमित्यर्थः । अत्र क्रमेण च वचनानि । तत्र निशीथव्या-पिन्या ग्राह्यत्वम्––दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला । रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुतामिति वचनादवगन्तव्यम् । रोहिणीकालश्च मुख्यो निर्णायकः ।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्तमपि लभ्येत सोपोष्या सा महाफला ॥

इति विष्णुरहस्यात् ।

विनर्क्षं तु न कर्तव्या नवमीसंयुताऽष्टमी ।
कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताऽष्टमी ॥

इत्यादिपुराणाच्च ॥ ७४ ॥

बुधे सोम इति ।

प्रेतयोनिं गतानां तु प्रेतत्वं नाशितं नरैः ।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ।

इत्यादिवचनादित्यर्थः । पारणानिर्णयमाह––तिथ्यर्क्षयोरिति । तथा च व्रता-रम्भे––अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित् । हन्यात्पुराकृतं कर्म उप-वासार्जितं फलम् ॥ तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् । तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणमिति । स्कान्देऽपि––तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् । अतोऽन्यथा पारणे तु व्रतभङ्गमवाप्नुयादिति । तिथिभान्तश्च द्विविधः । उभयान्त एकतरान्तश्चेति । तत्र उभयान्तो मुख्यः । एकतरान्तो गौणः ।

तिथिनक्षत्रसंयोग उपवासो यदा भवेत् ।
पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः ॥

इति नारदीयात् । रात्रावुभयान्तलाभे––तिथ्यर्क्षयोर्यदा छेदो नक्षत्रान्तमथापि वा । अर्धरात्रेऽपि वा कुर्यात्पारणं तु परेऽहनीति । तथा–न रात्रौ पारणं कुर्या-दृते च रोहिणीव्रतात् । तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशामिति वच-नाच्च ॥ ७५ ॥

अशक्तस्तु प्रातरेव पारणं कुर्यात्–तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारण-मिति स्मरणात् । उत्सवः पूजाजागरणरूपस्तस्यान्ते प्रातःकाल इत्यर्थः । यस्मि-न्वर्ष इति । जयन्त्याख्यः––अष्टमीरोहिणीरूपः ॥ ७६ ॥

अन्तर्भूता जयन्त्यां स्याद्दक्षयोगप्रशस्तितः ।
नवमी पूर्वविद्धैव पक्षयोरुभयोरपि ॥ ७७ ॥
मध्याह्ने रामनवमी पुनर्वसुसमन्विता ।
ग्राह्या, नैवाष्टमीयुक्ता सनक्षत्राऽपि वैष्णवैः ॥ ७८ ॥
कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता ।
जयन्तीव्रतवन्नित्यं काम्यं चैकादशीव्रतम् ॥ ७९ ॥
अरुणोदयवेधस्तु वेधः सूर्योदये तथा ।
उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्तयोः क्रमात् ॥ ८० ॥
कलाकाष्ठादिवेधोऽपि ग्राह्योऽत्र त्रिमुहूर्तवत् ।
वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः ॥ ८१ ॥
विद्धा त्याज्या वैष्णवेन शुद्धाऽप्याधिक्यसंभवे ।
एकादशी द्वादशी वाऽधिका चेत्त्यज्यतां दिनम् ॥ ८२ ॥
पूर्वं ग्राह्यं तूत्तरं स्यादिति वैष्णवनिर्णयः ।

अन्तर्भूतेति । जयन्तीव्रतानुष्ठानेनैव चरितार्थेत्यर्थः । कुतस्तत्राऽऽह—ऋक्षेति । जन्माष्टम्या अपि रोहिणीयोगेनैव ग्राह्यत्वोक्तेरित्यर्थः । इति माधवीयकारिकाविवरणेऽष्टमीनिर्णयः ।

अथ नवमीनिर्णयमाह—नवमीति । वसुरन्ध्रयोरिति युग्मवाक्यात् ।

अष्टम्या नवमी विद्धा नवम्या चाष्टमी युता ।
अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥

इति पद्मपुराणवचनाच्चेति भावः ॥ ७७ ॥

मध्याह्न इति । रामनवमी चैत्रशुक्लनवमी मध्याह्नव्यापिनी पुनर्वसुनक्षत्रयुता ग्राह्या । चैत्रशुक्ले तु नवमी पुनर्वसुयुता यदि । सैव मध्याह्नयोगेन महापुण्यतमा भवेदिति वचनात् । अत्र मध्याह्नव्याप्तिर्मुख्या निर्णायिका, पुनर्वसुयोगे तु प्राशस्त्यमात्रम् । तेन मध्याह्नव्याप्तेर्दिनद्वये सत्त्व उभयत्रासत्त्वे च पुनर्वसुयोगो निर्णायकः । वैष्णवैश्चाष्टमीविद्धा न ग्राह्या । नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः । उपोषणं नवम्यां वै दशम्यां पारणं भवेदिति वचनात् ॥ ७८ ॥ इति माधवीयकारिकाविवरणे नवमीनिर्णयः ।

अथ दशमीनिर्णयमाह—कृष्णेति ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति वचनात् । तेन परविद्धानिषेधः कृष्णपक्षदशमीविषयः । इति माधवीयकारिकाविवरणे दशमीनिर्णयः ।

अथैकादशीनिर्णयमाह—जयन्तीव्रतवदिति । उपोष्यैकादशीं नित्यं पक्षयोरुभयोरपीति गरुडपुराणे नित्यमित्यभिधानात् ।

न करोति हि यो मूढ एकादश्यामुपोषणम् ।
स नरो नरकं याति रौरवं तमसावृतम् ॥

इति सनत्कुमारवचनात् । तथा विष्णुरहस्ये—यदीच्छेद्विष्णुसायुज्यं श्रियं संततिमात्मनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति फलश्रवणान्नित्यकाम्योभयरूपमेकादशीव्रतमित्यर्थः ॥ ७९ ॥

अरुणोदयेति । उदयात्प्राक्चतस्रस्तु नाडिका अरुणोदयः, इत्युक्तोऽरुणोदयस्तत्र दशमीप्रवेशेऽरुणोदयवेधो भवति । सूर्योदये तु प्रवेशे सूर्योदयवेधः । वैष्णवेनारुणोदयविद्धैकादशी न कार्या ॥ ८० ॥

वैष्णवलक्षणमाह—वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णव इति । तथा च स्कन्दपुराणे—परमापदमापन्नो हर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षाऽस्ति वैष्णवी । तथा—दशमीवेधसंयुक्ता यदि स्यादरुणोदये । नैवोपोष्यं वैष्णवेन तद्धि नैकादशीव्रतमिति गरुडपुराणात् । सूर्योदयवेधस्तु तद्व्यतिरिक्तस्मार्तविषयः ।

उदयोपरि विध्येत दशम्यैकादशी यदि ।
दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः ॥

इति काण्ववचनात् । अत्र न पूर्ववत्त्रिमुहूर्तवेधः, किंतु कलाकाष्ठादिरूपोऽपि—कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदि । तदाऽप्येकादशीं हित्वा द्वादशीं समुपोषयेदिति वचनात् ॥ ८१ ॥

तत्र विद्धा सर्वथैव वैष्णवेन त्याज्या । शुद्धायामप्याह—शुद्धाऽपीति । आधिक्यं चात्र त्रिविधम् । एकादशीमात्राधिक्यम् । द्वादशीमात्राधिक्यम् । उभयाधिक्यं च । तत्र एकादशीमात्राधिक्ये प्राह विष्णुः—

अधिकैकादशी यत्र द्वादश्यां वृद्धिगामिनी ।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणमिति ॥

द्वादश्याधिक्ये व्यासः—

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत् परमां गतिमिति ॥

उभयाधिक्ये गुरुराह—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदीति ॥ ८२ ॥

इति वैष्णवनिर्णयः ।

एकादशी द्वादशी चेत्युभयं वर्धते यदा ॥ ८३ ॥
तदा पूर्वदिनं त्याज्यं स्मार्तैर्ग्राह्यं परं दिनम् ।
एकादशीमात्रवृद्धौ गृहियत्योर्व्यवस्थितिः ॥ ८४ ॥
उपोष्या गृहिभिः पूर्वा यतिभिस्तूत्तरा तिथिः ।
द्वादशीमात्रवृद्धौ तु शुद्धाविद्धे व्यवस्थिते ॥ ८५ ॥
शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृशः ।

अथ स्मार्तनिर्णयः—एकादशीति । संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या परा पुण्या परतो द्वादशी यदीति गरुडपुराणात् ॥ ८३ ॥

एकादशीमात्रेति । प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंयुता । द्वादश्यां च तथा तात दृश्यते पुनरेव सा । पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो । इति स्कन्दपुराणात् ॥ ८४ ॥

द्वादशीमात्रेति । चेत्स्यादेकादशी विष्णौ द्वादशी परतः स्थिता । उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम् । इति नारदवचनात् । एवं शुद्धाभेदा व्यवस्थिताः । विद्धाधिकायामप्येकादशीमात्राधिक्ये तु प्रचेताः—एकादशी विवृद्धा चेच्छुक्ले कृष्णे विशेषतः । उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृहीति । न चैतद्वाक्यं शुद्धाधिक्ये चरितार्थमिति शङ्कनीयम् । बाधकाभावेन विद्धाधिक्येऽपि तद्वचनप्रवृत्तेर्निवारयितुमशक्यत्वात् । द्वादश्याधिक्ये तु परेद्युरुपवासः । तदाह व्यासः—एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिमिति । उभयाधिक्येऽपि परेद्युरुपवासः—एकादशीं दिशा युक्तां वर्धमाने विवर्जयेत् । क्षयमार्गस्थिते रुद्रे कुर्वीत दशमीयुताम् । उभयानाधिक्ये तु नास्ति संदेहः । तदेवं स्मार्तनिर्णयसंग्रहः—एकादशीद्वादश्योरुभयोर्वृद्धौ परेद्युरुपवासः । द्वयोरप्यवृद्धौ पूर्वेद्युः । एकादशीमात्रवृद्धौ गृहियतिव्यवस्था । द्वादशीमात्रवृद्धौ शुद्धा पूर्वा विद्धा तु परेति ॥ ८५ ॥ ८६ ॥

अथाधिकारी निरूप्यते । तत्र कूर्मपुराणे—एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृहीति । तेन गृहस्थस्य शुक्लैकादश्यामेवोपवासः । नैमित्तिककाम्यौ तु कृष्णायामपि कार्यौ । तत्र नैमित्तिकः स्मृत्यन्तरे—शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचनेति । काम्यस्तु मात्स्ये—एकादश्यां तु कृष्णायामुपोष्य विधिवन्नरः । पुत्रानायुःसमृद्धिं च सायुज्यं च स गच्छति । तथा दिनक्षयेऽपि पुत्रवद्गृहस्थस्योपवासो निषिद्धः । तथा च पितामहः—एकादश्यां क्षयदिन उपवासं

करोति यः । तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथेति । अतश्च तत्र किंचिद्भक्षणीयम् ।

> उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् ।
> न दुष्यत्युपवासेन उपवासफलं लभेत् ॥

इति वायुपुराणात् । तच्च तत्रैवोक्तम्—नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाऽऽज्यम् । यत्पञ्चगव्यं यदि वाऽपि वायुः प्रशस्तमत्रोत्तरमुत्तरं चेति । तथा मार्कण्डेये—नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा । निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकमिति । तथा मनुः—पुष्पालंकारवस्त्राणि गन्धधूपानुलेपनम् । उपवासे न दुष्यन्ति दन्तधावनमञ्जनमिति । मुख्योपवासासामर्थ्ये सर्वेषामुपकल्पो मार्कण्डेयपुराणे—एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन न निर्द्वादशिको भवेदिति । दानं चोक्तं स्मृत्यन्तरे—उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् । तावद्धनादि वा दद्याद्भक्त्या तद्द्विगुणं भवेदिति । सर्वथैवाशक्तौ विष्णुरहस्ये—असामर्थ्ये शरीरस्य व्रते च समुस्थिते । कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितमिति । अत्र प्रसङ्गाद्व्रते निषिद्धानि कथ्यन्ते । अङ्गिराः—सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे । उपवासफलं प्रेप्सुर्जह्याद्भक्तचतुष्टयमिति । बृहस्पतिरपि—दिवा निद्रां परान्नं च पुनर्भोजनमैथुने । क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेदिति । कूर्मपुराणेऽपि—

> कांस्यं मांसं मसूरांश्च चणकान्कोरदूषकान् ।
> शाकं मधु परान्नं च त्यजेदुपवसन्स्त्रियम् ॥ इति ।

तथा—असकृज्जलपानं च दिवा स्वापं च मैथुनम् ।
> ताम्बूलचर्वणं मांसं वर्जयेद्व्रतवासरे ॥ इति ।

वसिष्ठः—उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम् ।
> दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि च ॥ इति ।

उपवासदिने श्राद्धप्राप्तौ कात्यायनः—

> उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
> उपवासं तदा कुर्यादाघ्राय पितृसेवितमिति ।
> श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम् ।
> हविर्देवा न गृह्णन्ति कव्यं च पितरस्तथा ॥

इति वचनाद्भोजने प्राप्ते तदनुकल्पतयाऽऽघ्राणं विधीयते । तत्र तावदनुष्ठानक्रमः—दशम्यामेकभक्तं कृत्वा दन्तधावनं कुर्यात् ।

> दशम्यामेकभुग्भूत्वा खादयेद्दन्तधावनम् ॥ इति स्मरणात् ।

ततो दशमीरात्रौ नियमग्रहणम्—

प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ।
दशम्यामुपवासस्य प्रकुर्याद्वैष्णवव्रतम् ॥ इति ब्रह्मवैवर्तात् ॥

नियमास्तु नारदीये—

अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः ।
अवनीतल्पशयनाः प्रियासङ्गविवर्जिताः ॥ इति ।

हविष्याणि च—

हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तुकं हिलमोचिका ।
षष्टिकाः कालशाकं च मूलकं केमुकेतरत् ।
कन्दः सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
तिन्तिणी जीरकं चैव नागरं गजपिप्पली ॥
कदली लवली धात्री फलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥

इति स्मृतावुक्तानि । स्मृत्यन्तरेऽपि—

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन्सर्वालाभे विवर्जयेत् ॥ इति ।

अग्निपुराणे—

व्रीहिषष्टिकमुद्गाश्च कलायाः सतिलं पयः ।
श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः ।
कूष्माण्डालाबुवृन्ताकपालङ्क्यो ज्योत्स्निकास्त्यजेत् ।
मधु मांसं विहायान्यद्व्रते च हितमीरितम् ॥ इति ।

हेमन्ते भवं हैमन्तिकम् । सितं श्वेतम् । नतु कृष्णपीतादिवर्णम् । हिलमोचिका शाकविशेषः । कालशाकं पूर्वदिशि प्रसिद्धम् । मूलकं कन्दविशेषः । तद्व्यतिरिक्तम् । नागरं शुण्ठी । लवली हरफरेवडीति प्रसिद्धम् । ज्योत्स्निका कोशातकी । गौरो गौरसर्षपः । तत एकादश्यां प्रातः संकल्पं कुर्यात् । तथा च वराहपुराणे—गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासं तु गृह्णीयाद्यद्वा वार्येव धारयेदिति । औदुम्बरं ताम्रपत्रम् । गृह्णीयात् । संकल्पयेत् । तत्र मन्त्रमाह विष्णुः—एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि । भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत । इत्युच्चार्य ततो विद्वान्पुष्पाञ्जलिमथार्पयेदिति । ततस्तत्पात्रगतं जलं पिबेत् । अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम् । उपवासफलं प्रेप्सुः पिबेत्पात्रगतं जलमिति । विद्धैकादश्युपवासे रात्रौ संकल्पः—

विद्धोपवासे सकलं दिनं त्यक्त्वा समाहितः ।
रात्रौ संपूजयेद्विष्णुं संकल्पं च तदा चरेदिति ॥

नारदीयात् । अर्धरात्रानन्तरं दशमीयुक्ता चेदेकादशी तदा मध्याह्नोपरि संकल्पः ।

दशम्याः सङ्गदोषेण अर्धरात्रात्परेण तु ।
वर्जयेच्चतुरो यामान्संकल्पार्चनयोः सदा ॥

इति वचनात् । द्वादशीकर्तव्यमाह कात्यायनः—

प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।
मन्त्रं जपित्वा हरये निवेद्योपोषणं व्रती ॥
द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोदकीमिति ।

सूतकादौ दानार्चनरहितमुपवासमात्रं कुर्यात् । तदुक्तं कूर्मपुराणे—

काम्योपवासे संप्राप्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् ॥ इति ।

वराहपुराणे—

सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते ॥
मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः ।
द्वादश्यां तु समश्नीयाज्ज्ञात्वा विष्णुं प्रणम्य च ॥ इति ।

तत्र परित्यक्तदेवार्चनं सूतकान्ते कुर्यात् । तदुक्तं मत्स्यपुराणे—सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् । दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते ॥ इति ।

स्त्रीणां रजोदर्शनेऽपि न व्रतत्यागः । किंतु देवार्चनादिरहितं सूतकादाविवोपवासमात्रं कार्यम् । तदाह पुलस्त्यः—एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपीति । ऋष्यशृङ्गोऽपि—संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतमिति । सत्यव्रतोऽपि—आरब्धदीर्घतपसां नारीणां यद्रजो भवेत् । न तत्रापि व्रतस्य स्यादुपरोधः कदाचनेति । शुद्ध्यनन्तरं देवार्चनादिकं कारयेत् । तथा च स्मृतिः—स्नात्वा भर्तुश्चतुर्थेऽह्नि शुद्धिः स्यात्परिचारणे । पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणि ॥ इति ।

नित्योपवासप्रकारो विष्णुरहस्येऽभिहितः—अथ नित्योपवासी चेत्सायंप्रातर्भुजिक्रियाम् । वर्जयेन्मतिमान्विप्रः संप्राप्ते हरिवासरे ॥ इति ।

ब्रह्मवैवर्तीये—

इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम् ।
विशेषनियमाशक्तोऽहोरात्रं भुक्तिवर्जितः ॥

निगृहीतेन्द्रियः श्रद्धासहायो विष्णुतत्परः ।
उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः ॥ इति ।

यदा द्वादश्यां श्रवणनक्षत्रं तदा शुद्धैकादशीमपि परित्यज्य द्वादश्यामेवोपवसेदित्याह--

**श्रवणेन युता चेत्स्याद्द्वादशी सा हि वैष्णवैः ॥ ८६ ॥**
**स्मार्तैश्चोपोषणीया स्यात्त्यजेदेकादशीं तदा ।**
**उपवासव्रतादन्यव्रते सार्धमुहूर्तकैः ॥ ८७ ॥**
**सप्तभिर्दशमीविद्धामेतामेकादशीं त्यजेत् ।**

श्रवणेनेति । तथा च नारदीये--शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता । तयोरेवोपवासः स्यात् त्रयोदश्यां च पारणम् ॥ इति ।

तयोः शुक्लकृष्णद्वादश्योः । एच्चोपवासद्वयासमर्थं प्रति । समर्थस्तूपवासद्वयं कुर्यात् । तदा च जलप्राशनेन पारणम् । अपोऽश्नाति तन्नैवाशितं नैवानशितमिति श्रुत्या जलप्राशनस्याशितानशितोभयरूपतयोक्तेः । यदा च पारणादिने कलामात्रं दण्डमात्रं दण्डद्वयं वा द्वादशी तदा तन्मध्य एव पारणा कार्या । तदुक्तं नारदीये--अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये । स्नानार्चनक्रियाः कार्या दानहोमादिसंयुताः । महाहानिकरी ह्येषा द्वादशी लङ्घिता नरैः । करोति धर्महरणमस्नातेव सरस्वती । स्कान्देऽपि--यदा भवेदतीवाल्पा द्वादशी पारणादिने । उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं च तदिति । उपवासेति । तथा च द्वादशीकल्पे--पूर्णाविद्धां दिनार्धेन नन्दां पूर्णामपि त्यजेत् । यदीच्छेदात्मसंतानं नियमेषु चतुर्ष्वपि । नोपोषितं च नक्तं च नैकभक्तमयाचितम् । नन्दायां पूर्णविद्धायां कुर्यादैश्वर्यमोहितः ॥ इति । दिनार्धेन सार्धसप्तमुहूर्तैरित्यर्थः । अत एव दिक्रूपश्वदशभिस्तथेति प्रागुदाहृतम् । इतो न्यूनवेधे तु तिथ्यन्तरवन्मध्याह्नादिव्याप्त्या निर्णय इति संक्षेपः ॥ ८६ ॥ ८७ ॥ इति माधवीयकारिकाविवरण एकादशीनिर्णयः ॥

**द्वादशी पूर्वविद्धैव व्रतेषु निखिलेष्वपि ॥ ८८ ॥**
**शुक्ला त्रयोदशी पूर्वा, परा कृष्णा त्रयोदशी ।**
**अलाभे साऽपि पूर्वैव पराऽनङ्गत्रयोदशी ॥ ८९ ॥**
**या शुक्ला गृह्यते पूर्वा, गृह्यते साऽऽपराह्णिकी ।**

अथ द्वादशीनिर्णयमाह--द्वादशी पूर्वविद्धेति । रुद्रेण द्वादशी युक्तेति युग्मवाक्यादित्यर्थः । अथ श्रवणद्वादशीनिर्णयः । अत्र द्वादश्या अल्पश्रवणयोगेऽपि श्रवणद्वादशीप्रयुक्तमुपवासादि भवति । द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा तिथिः । न तु सा

तेन संयुक्ता तावत्येव प्रशस्यते ॥ इति । तत्र विद्धाधिकाया दिनद्वयेऽपि श्रवणयोग एका- दशीयुता ग्राह्या । द्वादशीश्रवणस्पृष्टा स्पृशेदेकादशीं यदा । स एष वैष्णवो योगो विष्णुशृ- ङ्खलसंज्ञितः । उपोष्य विधिवत्तत्र नरः संक्षीणकिल्बिषः । प्राप्नोत्यनुपमां सिद्धिं पुनरावृत्ति- दुर्लभामिति मात्स्यात् । तन्त्रेण च तदैकादशीद्वादशीप्रयुक्तमुपवासद्वयम् । तत्रैव यदा श्रवणमेकादशीं स्पृष्ट्वा द्वादशीं स्पृशति तदाऽतिप्राशस्त्यमुक्तं नारदीये—संस्पृश्यैकादशीं राजन्द्वादशीं यदि संस्पृशेत् । श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहतीति । यदा शुद्धाधिका दिनद्वयेऽपि श्रवणयोगः । स चोत्तरदिन एव उदयकालीनस्तदोत्तरा ग्राह्या । तथा च बृहन्नारदीये—उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रत इति । यदा तु द्वादश्याः श्रवणयोग एव नास्ति किंत्वेकादश्यामेव तदा तस्यामपि श्रवणद्वादशी- प्रयुक्तं व्रतं कार्यम् । तदुक्तं नारदीये—यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् । एकादशी तदोपोष्या पापघ्नी श्रवणान्वितेति । विद्धाधिकाया अप्युत्त- रदिने श्रवणयोगाभावे श्रवणयोगवती विद्धाऽपि ग्राह्या । दशम्यैकादशी यत्र सा नोपोष्या भवेत्तिथिः । श्रवणेन तु संयुक्ता सा शुभा सर्वकामदेति वह्निपुराणात् । तदाऽप्येकादश्युपवासस्य तेन सह तन्त्रमेव । यदा त्वेकादशीद्वादश्युपवासौ द्वौ दिन- भेदेन प्राप्नुतस्तत्र शक्तेन द्वयमपि कर्तव्यम् । एकादशीमुपोष्यैव द्वादशीं समुपोष- येत् । न तत्र विधिलोपः स्यादुभयोर्देवतं हरिरिति भविष्योक्तेः । यस्तु द्वादश्यन्तर उपक्रान्तकतिचिद्वर्षव्यापिश्रवणद्वादशीव्रतप्रयोग उपवासद्वयासामर्थ्यनिश्चयात्कृतैकादशी- व्रतसंकल्पः पश्चात्तत्रासमर्थः स संकल्पं तमेकादश्युपवासं विधाय श्रवणद्वादश्यां तत्प्र- युक्तं विष्णुपूजादि विधाय भुञ्जीत । संकल्पबाधप्रसङ्गाच्छेषिविरोधप्रसङ्गाच्च । तदुक्तं मात्स्ये—द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि ।

उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम् ॥ इति ।

हरिपूजामेव कुर्यान्नतूपवासमित्यर्थः । उपवासप्रकरणे तदङ्गहरिपूजायाः प्राप्तत्वादेव तद्विधिवैयर्थ्यात् । यस्तु तादृशः प्रागेव निश्चितोपवासद्वयासामर्थ्यः स काम्यं नित्यस्य बाधकमिति न्यायेन श्रवणद्वादश्यामेवोपवासं कुर्यात् । तदुक्तं नारदीये—

उपोष्य द्वादशीं पुण्यां वैष्णवर्क्षेण संयुताम् ।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् ॥

वाजपेये यथा योगे कर्महीनोऽपि दीक्षितः । सर्वं फलमवाप्नोति अस्नातोऽप्यहुतोऽपि सन्निति । तथा तत्रैवोपसंहारग्रन्थे—

एवमेकादशीं भुक्त्वा द्वादश्यां समुपोषणात् ।
पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयम् ॥ इति ।

श्रवणद्वादशीयोगे बुधवारो यदा भवेत् । अत्यन्तमहती नाम द्वादशी सा प्रकीर्तितेति विष्णुधर्मोत्तरात् । भाद्रेऽत्यन्तफलप्रदा—

मासि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता ।
अत्यन्तमहती तस्यां दत्तं भवति चाक्षयम् ॥

इति स्कान्दात् । तस्यां संगमस्नानादि कार्यम् ।

स्नानं जप्यं तथा दानं होमः श्राद्धं सुरार्चनम् ।
सर्वमक्षय्यफलदं तस्यां भृगुकुलोद्भव ॥
तस्मिन्नेव दिने यस्तु स्नातः क्वचनसंगमे ।
स गङ्गास्नानजं राम फलं प्राप्नोत्यसंशयम् ।
श्रवणे संगमाः सर्वे परपुष्टिप्रदाः सदा ।
विशेषाद्द्वादशीयुक्ते बुधयुक्ते विशेषतः ॥

इति विष्णुधर्मोत्तरात् ॥ ८८ ॥ इति माधवीयकारिकाविवरणे **द्वादशीनिर्णयः** ॥

अथ त्रयोदशीनिर्णयमाह—शुक्लेति ।

त्रयोदशी प्रकर्तव्या द्वादशीसहिता मुने ।

इति ब्रह्मवैवर्तात् । इदं च शुक्लत्रयोदशीविषयमेव ।

षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा ॥

इति निगमे कृष्णत्रयोदश्याः परविद्धत्वेनोक्तेः । अलाभ इति । **द्वितीयदिने** त्रिमुहूर्तालाभे । साऽपि कृष्णाऽपि । अनङ्गत्रयोदशी **मार्गशीर्षशुक्लत्रयोदशी** पूर्वा । अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुता इति विशेषतोऽपि **संवर्तोक्तेः** ॥८९॥

या शुक्लेति । त्रयोदशी प्रकर्तव्या या भवेदापराह्णिकीति **स्कान्दादित्यर्थः** ।

इति माधवीयकारिकाविवरणे त्रयोदशीनिर्णयः ॥

**चतुर्दश्युत्तरा शुक्ला पूर्वा कृष्णा चतुर्दशी ॥ ९० ॥**
**उदये द्विमुहूर्ताऽपि ग्राह्याऽनन्तव्रते तिथिः ।**
**शुक्लाऽपि रात्रियुक्ता स्याच्चैत्रश्रावणमासयोः ॥ ९१ ॥**
**शुक्ला सर्वाऽपि पूर्वैव यदि स्यादापराह्णिकी ।**
**प्रदोषे वा निशीथे वा द्वयोर्वा याऽस्ति सा भवेत् ॥ ९२ ॥**
**शिवरात्रिव्रते तत्र द्वयोः सत्ता प्रशस्यते ।**
**तदभावे निशीथैकव्याप्ताऽपि परिगृह्यताम् ॥ ९३ ॥**
**तस्याश्चासंभवे ग्राह्या प्रदोषव्यापिनी तिथिः ।**
**तिथ्यन्ते पारणं यामत्रयादर्वाक्समापने ॥ ९४ ॥**
**अन्यथा पारणं प्रातरन्यतिथ्युपवासवत् ।**
**पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः ॥ ९५ ॥**
**नाड्योऽष्टादश भूतस्य स्युश्चेत्तत्र परेऽहनि ।**

अथ चतुर्दशीनिर्णयमाह--चतुर्दश्युत्तरेति । चतुर्दश्या च पूर्णिमेति युग्मवाक्यात् । कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धा तु कर्तव्या परविद्धा न कर्हिचिदित्यापस्तम्बवचनाच्चेत्यर्थः ॥ ९० ॥

उदय इति । भाद्रपदशुक्लचतुर्दश्यामनन्तव्रतम् । तत्र मध्याह्नव्यापिनी ग्राह्या ।

मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे ।

ददर्श शीला सा स्त्रीणां समूह रक्तवाससाम् ॥

चतुर्दश्यामर्चयन्तं भक्त्या देवं पृथक्पृथगितीतिहासदर्शनादिति केचित्तन्निरासार्थमिदमुच्यते । दैवे ह्यौदयिकी ग्राह्येति वचनेन युग्मशास्त्रादिभिश्चोदयव्यापिन्यास्त्रिमुहूर्ताया द्विमुहूर्ताया वा ग्रहणमुचितम् । इतिहासे तु मध्याह्नस्य विधानाभावात्तत्कल्पनस्य च प्रत्यक्षवचनविरोधेऽनुचितत्वादिति भावः । क्वचिदपवादमाह--शुक्लाऽपीति । मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी । सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनीति बौधायनोक्तेः । परा मासान्तरवर्तिनी शुक्लचतुर्दशीत्यर्थः । पूर्वदिनेऽपराह्णव्यापित्वे शुक्लचतुर्दश्यपि पूर्वैवेत्यर्थः । तदुक्तं स्कान्दे--

चतुर्दशी च कर्तव्या त्रयोदश्या युता विभो ।

मम भक्तैर्महाबाहो भवेद्या चाऽऽपराह्णिकी ॥

दर्शविद्धा न कर्तव्या राकाविद्धा कदाचनेति । अत्र मम भक्तैरिति लिङ्गाच्छिवचतुर्दशीविषयत्वं द्रष्टव्यम् । अथ शिवरात्रिनिर्णयमाह--प्रदोषे वेति । त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु । भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेदिति वायुपुराणात् । प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी । रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेदिति स्मरणाच्च । निशीथवेधो नारदीये--

अर्धरात्रयुता यत्र माघकृष्णचतुर्दशी ।

शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ॥ इति ।

तथा--माघकृष्णचतुर्दश्यामादिदेवो महानिशि ।

शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः ॥

तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिरितीशानसंहितोक्तेश्च । एवं सत्येकस्मिन्नेव प्रदोषनिशीथोभयव्यापिनी तत्र व्रतं कार्यम् । दिनद्वयेऽप्युभयव्याप्तिस्तदभावश्चासंभवी । यदा पूर्वेद्युर्निशीथव्याप्तिः परेद्युश्च प्रदोषव्याप्तिस्तत्र त्रयोदशीयोगस्य प्रशस्तत्वात्पूर्वैव । तदुक्तं स्कान्दे--

जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।

पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैरिति ॥

यदा पूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः प्रदोषव्याप्तेरेकस्याः सद्भावाच्च परविद्धैव ग्राह्या । एतदभिप्रेत्य स्मर्यते--माघासिते भूतदिनं कदाचिदुपैति योगं यदि पञ्चदश्या । जयाप्रयुक्तां न तु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छि-

वस्येति । यदा पूर्वेद्युः प्रदोषादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः क्षयवशात्प्रदोषात्पूर्वमेव समाप्ता तदा पूर्वेद्युरेव निशीथव्याप्तत्वाद्ग्राह्या । एवं च दिनद्वयेऽपि निशीथव्याप्तौ तदव्याप्तौ च प्रदोषव्याप्तिर्नियामिका । तथा दिनद्वयेऽपि प्रदोषव्याप्तौ तदव्याप्तौ च निशीथव्याप्तिर्नियामिका । एकैकस्मिन्दिन एकैकव्याप्तौ जयायोगो नियामक इति । पारणानिर्णयमाह—तिथ्यन्त इति ।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ।

इति स्कान्दवचनस्य, उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम् ।

कृतैः सुकृतलक्षैश्च लभ्यते वाऽथवा न वा ॥

इत्यस्य चैवं व्यवस्था इत्यर्थः ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ इति माधवीयकारिकाविवरणे चतुर्दशीनिर्णयः ॥

अथ पञ्चदशीनिर्णयमाह—पूर्वविद्धैवेति ।

भूतविद्धा न कर्तव्या अमावास्या च पूर्णिमा ।
वर्जयित्वा मुनिश्रेष्ठाः सावित्रीव्रतमुत्तममिति ब्रह्मवैवर्तात् ॥ ९५ ॥

यदा त्वष्टादशघटिका चतुर्दशी तदा सावित्रीव्रतेऽपि परैवेत्याह—नाड्य इति । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति वचनादिति भावः ।

व्रतान्तराणि सर्वाणि परेऽह्न्यपि सर्वदा ॥ ९६ ॥
श्राद्धेऽपराह्णकालीनो दर्श आब्दिकवन्मतः ।
दिनद्वयेऽप्येकदेशवृत्तौ ग्राह्यो महत्त्वतः ॥ ९७ ॥
तुल्यत्वं चैकदेशे चेत्क्षये पूर्वाऽन्यथोत्तरः ।
कृत्स्नव्याप्तौ द्वयोरह्नोरुत्तरास्तिथिवृद्धितः ॥ ९८ ॥
साग्न्यनग्निव्यवस्था स्यान्स्याच्च चेदपराह्णयोः ।
पूर्वेद्युः साग्निकाः कुर्युरुत्तरेद्युर्निरग्निकाः ॥ ९९ ॥
पर्वप्रतिपदोः संधिर्मध्याह्ने वा ततः पुरा ।
अन्वाधानं पूर्वदिने यागः संधिदिने भवेत् ॥ १०० ॥
ऊर्ध्वं मध्याह्नतः संधावन्वाधानं हि तद्दिने ।
इष्टिं परदिने कुर्यादन्यो वाजसनेयिनः ॥ १०१ ॥
यस्तु वाजसनेयी स्यात्तस्य संधिदिनात्पुरा ।
न क्वाप्यन्वाहितिः किंतु सदा संधिदिने हि सा ॥ १०२ ॥

संधिश्चेत्सङ्गवादूर्ध्वं प्राक्चेदावर्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥ १०३ ॥

व्रतान्तराणि तु परविद्धायामेवेत्याह—व्रतान्तराणीति ॥ ९६ ॥ इति माधवीयकारिकाविवरणे पञ्चदशीनिर्णयः ॥

अथ श्राद्धदर्शनिर्णयमाह—श्राद्ध इति । अपराह्णः पितॄणामिति वचनादित्यर्थः । दिनद्वयेऽपीति । अपराह्णैकदेशे दिनद्वयेऽपि प्रवृत्ताऽधिकैकदेशव्यापिनी ग्राह्येत्यर्थः ॥९७॥

एकदेशसमव्याप्तावाह—तुल्यत्वं चेदिति । खर्वादिवचनादित्यर्थः । कृत्स्नेति । दिनद्वयेऽपि सकलापराह्णव्याप्तौ तिथिवृद्धिवशादुत्तरेत्यर्थः ॥ ९८ ॥

साग्नीति । उभयत्राप्यपराह्णस्पर्शाभावे साग्निकानग्निकव्यवस्था भवेत् । तामेव दर्शयति—पूर्वेद्युरिति । तदाह जाबालिः—अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये । आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मतेति । सिनीवाली दृष्टचन्द्रा पूर्वैव । कुहूर्नष्टचन्द्रा, उत्तरेत्यर्थः । निरग्न्यादेरित्यादिपदात्स्त्रीशूद्रादेरपि ग्रहणम् । तथा च लौगाक्षिः—सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि । स्त्रीभिः शूद्रैः पृथक्कार्या तथा चानग्निकैर्द्विजैरिति ॥ ९९ ॥ इति माधवीयकारिकाविवरणे दर्शनिर्णयः ॥

अथेष्टौ पर्वनिर्णयमाह—पर्वेति । अन्वाधानमग्निपरिग्रहरूपो यागारम्भः । पूर्वेद्युरग्निं गृह्णात्युत्तरमहर्यजतीति शतपथश्रुतेः । संधिपूर्वापरकाले यागप्रयोगः । अत एव बौधायनः—

सूक्ष्मत्वात्संधिकालस्य संधेर्विषय उच्यते ।
सामीप्यं विषयं प्राहुः पूर्वेणाप्यपरेण वा ॥ इति ।

एवं च—त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः । द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणीति लौगाक्षिवचनात्पर्वणोंऽशत्रयमौपवस्तस्यान्वाधानरूपस्य कालः । यागस्य च चत्वारोंऽशाः, पर्वचतुर्थांशमारभ्य प्रतिपदंशत्रयं कालः । अन्वाधाने पर्वचतुर्थांशो वर्ज्यः । यदा पर्वप्रतिपदौ संपूर्णे तदा नैव संदेहः । खण्डत्वे तु लौगाक्षिः—पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते । उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते । अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते । उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यत इति । उपोष्यान्वाधायेत्यर्थः । अत्र मध्याह्नादिशब्दा यौगिकाः, नतु पञ्चधाभागाश्रयणेन पारिभाषिकाः । तेनाह्नो मध्यो मध्याह्न इति योगेनाऽऽवर्तनं मध्याह्नशब्दार्थः । तत्पूर्वोत्तरभागौ पूर्वाह्णापराह्णशब्दार्थौ ज्ञेयौ । अयं च निर्णयो माध्यंदिनीयभिन्नानामित्याह—अन्य इति । वाजसनेयिभिन्न इत्यर्थः ॥ १०० ॥ १०१ ॥

वाजसनेयिनं प्रत्याह—यस्त्विति । अत एव तद्भाष्यार्थसंग्रहकारः—मध्यंदिनास्याह्नीह यस्मिन्प्राक्पर्वणः संधिरियं तृतीया । सा सर्विका वाजसनेयिनस्त्व

तस्यामुपोष्याथ परेद्युरिष्टिः । आवर्तनादूर्ध्वमस्तमयादर्वाग्यदा संधिर्भवति तदाऽहःसंधिमती तिथिः प्रथमा । रात्रौ संधिश्चेत्सा तिथिर्द्वितीया । ते उभे अपेक्ष्य पूर्वाह्णे संधिमती पर्वतिथिस्तृतीया खर्विका भवति । तस्यां तृतीयतिथौ पर्वकालस्याल्पत्वात्सा खर्विकाऽल्पेत्युच्यते । शाखान्तराध्यायिनामीदृशे विषये पूर्वेद्युरन्वाधानादिकं संधितिथाविष्टिः । वाजसनेयिनां तु संधितिथावन्वाधानमुत्तरतिथाविष्टिः । एवं सति वाजसनेयिनां न क्वापि संधिदिनात्पूर्वेद्युरन्वाधानादिकमस्ति । सोऽयं विशेषः । आवर्तने ततः पुरा वा यदा संधिर्भवति तदा वाजसनेयिव्यतिरिक्तानां पर्वचतुर्थांश इष्टिः प्राप्नोति । तत्र विशेषमाह गार्ग्यः—प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते । पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैरिति । नन्वपराह्णे संधौ प्रतिपच्चतुर्थांशस्य यागकालत्वं प्राप्नोति । तच्च प्रतिषिद्धम् ।

> न यष्टव्यं चतुर्थेऽशे यागैः प्रतिपदः क्वचित् ।
> रक्षांसि तद्धि लुम्पन्ति श्रुतिरेषा सनातनी ॥

इति स्मृतेः । अतस्तादृशे विषये याग एव लुप्येतेति चेन्मैवम् । वृद्धशातातपेन प्रतिप्रसवाभिधानात्–संधिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि । कुर्वाणः प्रतिपद्यागे चतुर्थेऽपि न दुष्यतीति । एवं तर्हि तन्निषेधो निर्विषयः स्यादिति चेत् । मैवम् । सद्यस्कालविषये चरितार्थत्वात् । तदाह कात्यायनः—संधिश्चेत्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिरिति । अनेन संधिदिनात्पूर्वेद्युः प्राप्तमन्वाधानं संधिदिन उत्कृष्यते । तदेतदाह—संधिश्चेदित्यादि ॥ १०२ ॥ १०३ ॥

संधिनिर्णयश्च न यथास्थितरीत्या किंत्वन्यथेत्याह—

> वृद्धिः प्रतिपदो याऽस्ति तदर्धं पर्वणि क्षिपेत् ।
> क्षयस्यार्धं तथा क्षिप्त्वा संधिर्निर्णीयतां सदा ॥ १०४ ॥
> बोधायनमते दर्शश्राद्धं चेष्टिर्विशिष्यते ।
> द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी ॥ १०५ ॥
> अन्वाधानं चतुर्दश्यां दर्शे स्वल्पेऽपि कारयेत् ।
> दर्शश्राद्धं तथा कार्यमिति बौधायनोदितम् ॥ १०६ ॥
> इष्ट्यादिविकृतिः सर्वा पर्वण्येवेति निर्णयः ।
> पञ्चमे तु प्रकरणे पूर्वार्धे भादिनिर्णयः ॥ १०७ ॥
> उत्तरार्धे कालभेदात्कर्मभेदोपदेशनम् ।
> यस्मिन्नस्तमियाद्भानुस्तन्नक्षत्रमुपोषणे ॥ १०८ ॥

मुख्यं तस्यासंभवे तु ग्रहीतव्यं निशीथयुक् ।

वृद्धिरिति । तिथेः परस्या घटिकास्तु याः स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासाम् । अर्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने तदिति वचनादित्यर्थः । अमावास्यायां विशेषमाह शातातपः–द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्याऽऽपराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति ॥ १०४ ॥

सोऽयं विशेषो नाऽऽश्वलायनापस्तम्बविषयः, किंतु बौधायनमतानुष्ठायिविषय इत्याह–बौधायनेति । अत एव बौधायनः–द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्याऽऽपराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् । चतुर्दशी चतुर्यामा अमावास्या न दृश्यते । श्वोभूते प्रतिपच्चेस्यात्पूर्वां तत्रैव कारयेत् । चतुर्दशी तु संपूर्णा द्वितीया क्षयगामिनी । चरुरिष्टिरमायां स्याद्भूते कव्यादिकी क्रिया ॥ इति । एतेषां वचनानामयमर्थः । अह्नि चतुर्दशी संपूर्णा । अस्तमयादर्वागमावास्या स्वल्पा । अत एव पूर्वापराह्णव्याप्त्यभावाच्छ्राद्धायान्वाधानाय वा पूर्वोक्तरीत्या यद्यपि निमित्तभावं न भजते तथाऽपि प्रतिपदि द्वितीयायां सत्यां चन्द्रस्य दृश्यमानत्वात्तद्दर्शने चेष्टेर्निषिद्धत्वात्प्रतिपद्युतायाममावास्यायामिष्टिः स्वल्पामावास्योपेतायां चतुर्दश्यां श्राद्धान्वाधानादिकं कर्तव्यमिति । तथा च बौधायनेनोक्तम्—यदा चतुर्दशी यामं तुरीयमपि पूरयेत् । अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥ इति । चन्द्रदर्शनोपेतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः–यजनीयेऽहनि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ॥ इति । स्मृत्यन्तरेऽपि–अर्वागस्तमयाद्यत्र द्वितीया तु प्रदृश्यते । तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ॥ इति । यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्निमाँल्लोकानभ्युदेतीति श्रुतिवचनं यच्चन्द्रदर्शनदिनेऽपि यागकर्तव्यताबोधकं तद्बौधायनातिरिक्तविषयम् ॥ १०५ ॥ १०६ ॥ इति प्रकृतिनिर्णयः ।

अथ विकृतिकालो निरूप्यते–इष्ट्यादीति । आदिना पशुयागसंग्रहः । पर्वण्येवेति । य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति वचने द्व्यहकालकत्वस्य बाधादित्यर्थः । तत्र विशेषः कात्यायनेनोक्तः–आवर्तनात्प्राग्यदि पर्वसंधिः कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः । तत्रैव यागः परतो यदि स्यात्तस्मिन् विकृत्याः प्रकृतेः परेद्युरिति । आवर्तने ततः पुरा वा पर्वसंधौ संधिदिने प्रकृतिं कृत्वा पश्चाद्विकृतिः कर्तव्या । यदाऽऽवर्तनात्परतः संधिस्तदा केवलविकृतियागः संधिदिने कर्तव्यः । प्रकृतियागस्तु संधिदिनात्परतोऽनुष्ठेय इत्यर्थः । आवर्तने ततः पूर्वकाले परकाले वा संधिरित्येतेषु संधिदिन एव विकृतेरनुष्ठानम् । प्रकृतेस्तु पूर्वोक्तरीत्या संधिदिने परेद्युर्वाऽनुष्ठानं व्यवतिष्ठते । इति विकृतिकालनिर्णयः ॥ इति माधवीयकारिकाविवरणे चतुर्थं प्रकरणम् ॥

पञ्चमप्रकरणार्थमाह—पञ्चमे त्विति । तत्र पूर्वार्धे नक्षत्रादिनिर्णयः । आदिना योगकरणसंग्रहः ॥ १०७ ॥

उत्तरार्धे तु कालभेदेन कर्मविशेषनिरूपणमित्यर्थः । यस्मिन्निति । नक्षत्रस्य दिनद्वयेऽपि सत्त्वे यस्मिन्दिनेऽस्तमयव्यापित्वं तत्र तन्निमित्तकोपवासः कार्यः । अयं मुख्यः पक्षः ॥ १०८ ॥

तदसंभवे तु निशीथव्यापि ग्राह्यमित्यर्थः । उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः । युज्यते यत्र वा राम निशीथे शशिना सहेति विष्णुधर्मोत्तरात् । अस्तमयनिशीथोभययोगे त्वतिप्राशस्त्यम् । एवं यदा पूर्वेद्युः केवलनिशीथयोगः परेद्युश्च केवलास्तमययोगस्तदा परेद्युरेवोपवासः । निशीथयोगस्तु ज्योतिःशास्त्र एव बोध्यः, नतु लौकिकः । दिनद्वयेऽप्यस्तमययोगाभावे निशीथयोगेन पूर्वेद्युरेवोपवासः ।

उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः ॥ १०९ ॥
उदये त्रिमुहूर्तस्थं नक्षत्रं व्रतदानयोः ।
दिनद्वये तथात्वे तु पूर्वं स्याद्बलवत्त्वतः ॥ ११० ॥
श्रवणं तूत्तरं ग्राह्यमुपाकरणकर्मणि ।
पित्र्ये तु तिथिवत्सर्वो नक्षत्रस्य विनिर्णयः ॥ १११ ॥
पूर्वः स्यादुपवासादावुत्तरो व्रतदानयोः ।
योगः श्राद्धे कर्मकालव्याप्तस्तु परिगृह्यताम् ॥ ११२ ॥
करणं यद्दिने तत्तु ग्राह्यं रात्रौ यदा तदा ।
दिनद्वयैकभक्ताभ्यामुपवासः प्रसिध्यति ॥ ११३ ॥
वारेषु संशयाभावाद्ग्रहीतव्यं यथास्थितम् ।

उपवास इति । उपवासे यादृशो नक्षत्रनिर्णयस्तादृश एव नक्तैकभक्तयोः । नतु प्रदोषमध्याह्नव्याप्तिभ्यामित्यर्थः । उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोरिति स्कान्दात् ॥ १०९ ॥

उदय इति । तथा च विष्णुधर्मोत्तरे—सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति । एतच्च परिशेषाद्व्रतादिविषयम् । द्विनद्वय इति । तथात्वे—उदयव्यापित्वे । बलवत्त्वतः संपूर्णाहोरात्रव्यापित्वात् ॥ ११० ॥

श्रवणं त्विति । धनिष्ठासहितं कुर्याच्छ्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं विद्यादुपाकरणसंज्ञकम् ॥ इति वचनात् ।
पित्र्ये त्विति । अपराह्णव्याप्तिवशादित्यर्थः ॥ १११ ॥

योगनिर्णयमाह—पूर्वः स्यादिति । पूर्वेद्युरस्तमयव्याप्तो ग्राह्यः । निशीथमात्रव्याप्तिस्तु न ग्राह्या । प्रमाणाभावात् । व्यतीपातपारणस्याहन्येव शास्त्रोक्तत्वात् । केवलनिशीथव्याप्तिग्रहणे संभवायोगादिति बोध्यम् व्रतदानयोरुत्तरो ग्राह्यः । श्राद्धे त्वपराह्णव्याप्तः ॥ ११२ ॥

करणमिति । बवबालवादिकरणानां तिथ्यर्धपरिमितत्वाद्दिनद्वयाव्यापित्वान्न संदेहः । तस्माद्यस्मिन् दिने करणसद्भावस्तद्दिन एव तत्कर्म कार्यम् । यदा तु सायंसंध्यामारभ्य परेद्युरुदयात्प्रागेव करणं समाप्येत तत्र कथमिति चेत् । तदा भद्राकरणोक्तन्यायेन सर्वकरणेषु निर्णय इति ब्रूमः । भद्राकरणे च निर्णयो भविष्योत्तरे भद्राव्रते पठ्यते—यस्मिन्दिने भवेद्भद्रा तस्मिन्नहनि भारत । उपवासस्य नियमं कुर्यान्नारी नरोऽपि वा । यदि रात्रौ भवेद्विष्टिरेकभक्तं दिनद्वये । कार्यं तेनोपवासः स्यादिति पौराणिको विधिः । प्रहरस्योपरि यदा स्याद्विष्टिः प्रहरत्रयम् । उपवासस्तदा कार्य एकभक्तं ततोऽन्यथेति । उदयादारभ्य यावदस्तमयं विष्टिसत्तायां नोपवासे संदेहः । यदा तु प्रहरमात्रे विष्टिर्नास्ति तस्योपरि प्रहरत्रयं विष्टिर्भवति तदा कृत्स्नदिनव्याप्तेर्भद्राया अभावेऽप्येकदेशव्याप्तेः सद्भावादुपवासोऽनुष्ठेयः । अन्यथेत्यनेनैकदेशव्याप्त्यभावोऽपि विवक्षितः । तस्मिन्पक्षे समनन्तरातीतवचनाद्दिनद्वयेऽप्येकभक्तं कार्यम् । यस्तु भद्राव्रतं संकल्प्याहोरात्रमुपोषितुं न शक्नुयात्, असौ भद्रायुक्तघटिकासु भोजनं परित्यजेत् । भद्रारहितकाले भुक्त्वाऽप्युपवासान्न हीयते । तथा च भविष्योत्तरे पठ्यते—

> स्नातः संपूज्य तामेव ब्राह्मणं च स्वशक्तितः ।
> ततो भुञ्जीत राजेन्द्र यावद्भद्रा न जायते ।
> अथवाऽन्तेऽपि भद्रायाः कामतो वाग्यतः शुचिः ।
> न किंचित्भक्षयेत्प्राज्ञो यावद्भद्रा प्रवर्तते ॥ इति ।

अह्नश्चरमभागे यदा भद्राप्रवेशस्तदानीमेकदेशे भद्रायोगिनो दिवसस्य तद्व्रतार्हत्वादशक्तस्य भद्राप्रवेशात्प्रागेव भोजने प्राप्ते सत्यभुक्तेनैव पूजादेरनुष्ठेयत्वाद्भद्रारहितेऽपि काले तत्पूजादिकं न विरुध्यते । यदा तु भद्राया अन्ते भुङ्क्ते तदा कर्मकालव्याप्तिशास्त्राद्भद्रोपेतकाल एव तत्पूजादिकं कर्तव्यम् । पक्षद्वयेऽपि भद्रायुक्तघटिकासु न किंचिद्भक्षयेत् । तावतैव भद्रोपवासः पूर्यते । बवादिकरणेषु कस्यापि विशेषस्य शास्त्रेणानुक्तत्वाद्भद्रायां क्लृप्तस्य न्यायस्यातिक्रमे कारणाभावाच्चायमेव निर्णयप्रकारः सर्वोऽपि योजनीयः ॥ ११३ ॥

न च तिथिनक्षत्रयोगकरणानां पञ्चाङ्गान्तःपातिनां निर्णयं कृत्वा तदन्तःपातिशास्त्रीयकर्मोपयोगी वारः कुत उपेक्ष्यत इति शङ्कनीयम् । अहोरात्रपरिमितत्वेन वारे संदेहाभावात् । तदाह—वारेष्विति । तदेवं नक्षत्रयोगकरणानि निर्णीतानि ।

आसन्ननाड्यः संक्रान्तेः पुण्याः स्नानादिकर्मसु ।
चरेषु कर्कटे पूर्वा मकरे विंशतिः पराः ॥ ११४ ॥
वर्तमाने तुलामेषे नाड्यस्तूभयतो दश ।
वृषभादौ स्थिरे पुण्याः प्राक्पश्चादपि षोडश ॥ ११५ ॥
मिथुनादौ द्विःस्वभाव उत्तराः षष्टिनाडिकाः ।
अहःसंक्रमणे रात्रावनुष्ठाननिषेधतः ॥ ११६ ॥
उक्तौ कालौ व्यवस्थाप्यौ तद्बलात्पूर्वपश्चिमौ ।
रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः ॥ ११७ ॥

अथ संक्रान्तिर्निर्णीयते । तत्र संक्रान्तिर्नाम मेषादिषु द्वादशसु राशिषु क्रमेण संचरतः सूर्यस्य पूर्वस्माद्राशेरुत्तरराशौ संक्रमणं प्रवेशः । तत्र च होमस्नानादि विहितम् । तस्य च सूक्ष्मकालेऽनुष्ठानासंभवात्कदाऽनुष्ठानमित्यत आह—आसन्नेति । तदाह देवलः—संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः । तद्योगादप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ॥ इति । एवं च संक्रान्तेः पूर्वं त्रिंशत्, ऊर्ध्वं च त्रिंशद्घटिकाः पुण्या इति सामान्यत उक्तम् । तत्रापि संक्रान्तिसमीपनाड्यः पुण्यतमा इत्यर्थः । या याः संनिहिता नाड्यस्तास्ताः पुण्यतमाः स्मृता इति वचनात् । तत्र विशेषमाह—चरेष्विति । मेषादिद्वादशराशिषु चत्वारि त्रिकाणि । तत्रैकैकस्मिंस्त्रिके क्रमेण चरस्थिरद्विस्वभावसंज्ञाः । तथा च मेषकर्कतुलामकराख्याश्चत्वारश्चराः । तेषु मध्ये कर्कटे पूर्वा विंशतिर्नाड्यः पुण्याः । मकरे च विंशतिर्नाड्यः पराः पुण्याः । तुलामेषयोस्तु वर्तमाने रवावुभयतः पराः पूर्वाश्च दश नाड्य इत्यर्थः । मिथुनादाविति । मिथुनकन्याधनुर्मीनानां द्विःस्वभावसंज्ञा षडशीतिमुखसंज्ञा च । तत्रोत्तरा घटिकाः पुण्या इत्यर्थः । इदं चाहःसंक्रमणविषयमित्याह—अहरिति । तत्र हेतुमाह—रात्राविति । राक्षसी सा हि कीर्तितेति मनुवचनाद्रात्रिसंक्रमणे दिवास्नानाद्यनुष्ठानासंभवाच्चेति भावः । उक्तौ कालौ—पूर्वपश्चिमौ । तद्बलान्निषेधानुसारेण व्यवस्थापनीयावित्यर्थः । तथा चास्तमयप्रत्यासन्नदिवासंक्रमणे सति प्रशस्तमप्युत्तरकालं त्यक्त्वा पूर्वकाल एव ग्राह्यः । एवं सूर्योदयोत्तरमेव संक्रमणे प्रशस्तमपि पूर्वकालं त्यक्त्वोत्तरकाल एव ग्राह्यः । तत्रार्थे वचनानि । वृद्धवसिष्ठः—अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत्कर्कटके ग्राह्या मकरे विंशतिः स्मृताः ॥ इति । उत्तरायणमतीतं सत्पुण्यं भवति । दाक्षिणायनमनागतं पुण्यम् । विंशतिरित्यनेन त्रिंशन्नाड्यः पवित्रिता इत्युत्सर्गस्य मकरेऽपवादः । बृहस्पतिरपि—वर्तमाने तुलामेषे नाड्यस्तूभयतो दशेति । षडशीति-

विषये वृद्धवसिष्ठवचनम्—षडशीत्यामतीतायां षष्टिरुक्तास्तु नाडिका इति । कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः । षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फलैः ॥ इति वचनोक्ताः संक्रान्तयः षडशीतिमुखसंज्ञाः । विष्णुपदे स एवाऽऽह—पुण्यायां विष्णुपद्यां च प्राक्पश्चादपि षोडशेति । वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः । एतद्विष्णुपदं नाम विषुवादधिकं फलैरिति वचनेनाऽऽम्नातं विष्णुपदम् । विषुवमिति तुलामेषयोः संज्ञा । वृद्धवसिष्ठः—

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ।
रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः ॥ इति ।

पूर्वदिनोत्तरार्धमुत्तरदिनपूर्वार्धं चेत्यर्थः । तदेतदाह—रात्रौ संक्रमण इति ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥

**अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।**
**ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥ ११८ ॥**
**पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।**
**प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥ ११९ ॥**
**कर्कटे मकरे रात्रावप्याचारादनुष्ठितिः ।**

तत्र व्यवस्थामाह—अर्धरात्रादिति ।

अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥

पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः । प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटाविति वृद्धवसिष्ठवचनात् । एवं सति—

विष्णुपद्यां धनुर्मीनवृषकन्यासु वै यदा ।
पूर्वोत्तरगतं रात्रौ भानोः संक्रमणं भवेत् ॥
पूर्वाह्णे पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्णे तु पञ्चैव श्रौते स्मार्ते च कर्मणि ॥

इति वचनमत्यन्तप्राशस्त्यपरं द्रष्टव्यम् । एवमयनव्यतिरिक्तेषु संक्रमणेषु रात्रिगतेषु यो निर्णय उक्तस्तं पर्युदसितुं मुक्त्वा मकरकर्कटावित्युक्तम् । तयोस्तु कथमित्याकाङ्क्षायामाह—कर्कट इत्यादि । तथा च याज्ञवल्क्यः—

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कार्यं निशि काम्यव्रतेषु चेति ।

सुमन्तुरपि—रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।
नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु ॥
यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने ।
दानान्येतानि शस्तानि रात्रौ देवालये तथा ॥
ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ॥ इति ।

नन्वेवमुरात्रावनुष्ठानं शास्त्रान्तरविरुद्धम् । तथा च भविष्योत्तरे—मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः । प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः । कार्मुकं तु परित्यज्य झषं संक्रमते रविः । प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनीति । वृद्धगार्ग्योऽपि—यदाऽस्तमयवेलायां मकरं याति भास्करः । प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि । अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥ इति । मैवम् । भविष्योत्तरवृद्धगार्ग्यवचनेषु रात्रावनुष्ठाननिषेधस्याप्रतीतेः । दिवसानुष्ठानविधानेनैवार्थाद्रात्र्यनुष्ठानप्रतिषेधकल्पने च पर्युदासानुग्रहीतवचनानामानर्थक्यं प्राप्नोति । तस्माच्छास्त्रद्वयबलेन विकल्पप्राप्तौ तत्तद्देशप्रसिद्धशिष्टाचारेण व्यवस्था द्रष्टव्या । तदाह—आचारादिति । तत्तद्वारयोगेन तत्तन्नक्षत्रयोगेन च संक्रान्तीनां मन्दादिसंज्ञा विस्तरभयान्न दर्शिताः । अत्र स्नानादिकृत्यमुक्तं ब्राह्मे—नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः । चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु । अहोरात्रोषितः स्नानमर्घ्यं दानं तथा जपम् । यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तदिति । संक्रान्तिभ्यः पूर्वं द्वादशदिने मेषायनमित्यादिनामाङ्कितमयनं भवति । तत्र स्नानादिषु पुण्यकालमाह जाबालिः—संक्रान्तिषु यथा कालस्तदीयेऽप्ययने तथा । अयने विंशतिः पूर्वा मकरे विंशतिः परेति । मकरव्यतिरिक्तासु संक्रान्तिषु यादृशः काल उक्तस्तदीयायनेऽपि स एव ज्ञेयः । मकरायने तु पूर्वा विंशतिर्मकरसंक्रान्तौ तु परा विंशतिरिति विशेष इत्यर्थः । इति संक्रान्तिनिर्णयः ॥ ११८ ॥ ११९ ॥

पूर्णिमाप्रतिपत्संधौ राहुः संपूर्णमण्डलम् ।
ग्रसते चन्द्रमर्कं च पर्वप्रतिपदन्तरे ॥ १२० ॥
ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥ १२१ ॥
सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना ॥ १२२ ॥

अथ ग्रहणं निर्णीयते । तत्र तत्स्वरूपं निरूपयति—पूर्णिमेत्यादिना । पूर्णिमाप्रतिपत्संधौ चन्द्रं ग्रसते । पर्वणो दर्शस्य प्रतिपदश्चान्तरेऽर्कं च ग्रसत इत्यर्थः । तदाह वृद्धगार्ग्यः—पूर्णिमाप्रतिपत्संधौ राहुः संपूर्णमण्डलम् । ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरे ॥ इति । तत्र किं कार्यं तदाह—ग्रस्यमान इति । ग्रासारम्भ इत्यर्थः । ईदृशमेव स्मृत्यन्तरवचनमत्र मानम् । होमदानवद्देवार्चनमपि कार्यम् । तदुक्तं ब्रह्मवैवर्ते—स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनमिति । एवं श्राद्धमप्याह मार्कण्डेयः—

विशिष्टब्राह्मणे प्राप्ते सूर्येन्दुग्रहणे दिने ।
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्यात्तथोच्छ्रये ॥ इति ।

तच्चाऽऽमेन हेम्ना वा ।

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वा ॥

इति शातातपवचनात्। आशौचेऽपि ग्रहणे स्नानादि कार्यम्। तथा च वृद्धवसिष्ठः—

सूतके मृतके चैव न दोषो राहुदर्शने।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते॥ इति।

तथा स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतक इति वचनात्सकलं स्मार्तं कर्म भवति। यत्तु—ग्रहणनिमित्तमाशौचं तत्स्नानेन निवर्तते।

ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम्।
तयोः संपत्तिमात्रेण उपस्पृश्य क्रियाक्रमः॥ इति।

उपस्पृश्य स्नात्वा। षट्त्रिंशन्मतेऽपि—सर्वेषामेव वर्णानां सूतकं राहुदर्शने। स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेदिति। शृतमन्नं ग्रहणान्तारितमन्नम्। तत्र केषुचित्प्रतिप्रसवः—आरनालं तथा क्षीरं किलाटं घृतसक्तवः। तैलपक्वं च तैलं च न कदाचित्प्रदुष्यतीति।

तथा—आरनालं च तक्रं च ह्यादेयं घृतपाचितम्।
उदकं च कुशाच्छन्नं न दुष्येद्राहुदर्शने।

इति वचनात्। ग्रहणे भोजनव्यवस्थामाह मनुः—चन्द्रसूर्यग्रहे नाद्याद्द्यात्स्नात्वा विमुक्तयोः। अमुक्तयोरस्तगयोर्दृष्ट्वा स्नायात्परेऽहनीति। स्पर्शमारभ्य मोक्षपर्यन्तो ग्रहणकालस्तत्र न भुञ्जीत। किंतु मुक्तयोः सतोः पश्चात्स्नात्वा भुञ्जीत। यदा ग्रस्तास्तस्तदा परेद्युस्तौ विमुक्तौ दृष्ट्वा भुञ्जीतेत्यर्थः। न केवलं ग्रहणकाल एवाभोजनं किंतु प्रागपि। तदाह व्यासः— नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात। ग्रहकाले च नाश्नीयात्स्नात्वाऽश्नीयाद्विमुक्तयोरिति। पूर्वकालभोजननिषेधे विशेषमाह वृद्धवसिष्ठः—

ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः।
भुञ्जीताऽऽवर्तनात्पूर्वं पश्चिमे प्रथमादधः॥
रवेस्त्वावर्तनादूर्ध्वमर्वागेव निशीथतः।
चतुर्थप्रहरे चेत्स्याच्चतुर्थप्रहरादधः॥ इति।

रात्रौ प्रथमयामादूर्ध्वं चन्द्रग्रहणं चेदावर्तनान्मध्याह्नात्पूर्वं भुञ्जीत। रात्रिपश्चिमयामे चेद्रात्रिप्रथमयामादर्वाग्भुञ्जीत। अह्नश्चतुर्थे प्रहरे रविग्रहणं चेत्पूर्वरात्रेश्चतुर्थप्रहरादधो भुञ्जीतेत्यर्थः। चन्द्रग्रहणयामात्पूर्वं यामत्रयं भोजननिषेधः। सूर्यग्रहे च यामचतुष्टयमिति तात्पर्यार्थः। तथा च वृद्धगौतमः—सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्। चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विनेति। तदाह—सूर्यग्रहे त्विति॥ १२०॥ १२१॥ १२२॥

अपराह्णे न मध्याह्ने मध्याह्ने नतु संगवे।
भुञ्जीत संगवे चेत्स्यान्न पूर्वं भोजनक्रिया॥ १२३॥
ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्।
ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि॥ १२४॥
त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्।
मङ्गलेषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः॥ १२५॥

द्वादश्यादिस्तृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः ॥ १२६ ॥
खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयम्।
नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च ॥ १२७ ॥
उपाकर्मणि चोत्सर्गे ग्रहदोषो न विद्यते।
तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥ १२८ ॥
ईदृशं नियमं न्यायैर्विवरीतुमिहोद्यतः।
तमेव निर्णयं शास्त्रन्यायाभ्यां कर्तुमुद्यतः ॥ १२९ ॥
इति श्रीमाधवाचार्यविरचिते लघुमाधवे कालनिर्णयः समाप्तः ॥

बालादिविषये त्वाह—अपराह्ण इति। एवमेव मात्स्यवचनम्। समर्थस्य निषिद्धकालभोजने तु त्रिरात्रेणैव शुद्धिरिति। चन्द्रस्य ग्रस्तोदये विशेषमाह वृद्धवसिष्ठः—ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेदिति। तदाह—ग्रस्तोदय इति। ग्रस्तास्तमये विशेषमाह भृगुः—

ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि।
तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥ इति।

तदाह—ग्रस्तावेवेति। पापक्षयकामस्य ग्रहणदिन उपवास उक्तो दक्षेण—

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ॥ इति।

पुत्रवतो निषेधमाह नारदः—संक्रान्तावुपवासं च कृष्णैकादशिवासरे। चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृहीति। वारविशेषयोगे फलातिशयमाह व्यासः—

रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा।
चूडामणिरिति ख्यातस्तत्र दत्तमनन्तकम् ॥ इति।

व्यासः—सर्वं गङ्गासमं तोयं सर्वो ब्रह्मसमो द्विजः। सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोरिति ॥ १२३ ॥ १२४ ॥

ग्रहणपूर्वापरदिनेषु विवाहादिवर्जनं स्मृतावुक्तं तद्दर्शयति—त्रयोदश्यादित इति। एतदपवादं दर्शयति–नित्ये नैमित्तिक इति ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥

इति श्रीमद्धर्मशास्त्रपारावारीणतत्सद्रामचन्द्रभट्टात्मजभट्टवैद्यनाथसूरिकृते
कालमाधवीयकारिकाविवरणे पञ्चमं प्रकरणं संपूर्णम्।
समाप्तः समभूद्ग्रन्थश्च ॥